# गुरुवर्य हरि दामोदर वेलणकर



जन्म

१८-१०-१८९३

वारिन्यास वेदविलास हरिं शिष्यशङ्कर
नमामि विनत स्वगुरुमवहितन्त विद्याभूधरम् ॥
वयसः सुगता सप्ततिममा
यशसः सुषमा चेतोरमा
महसः सहमा नात्रोपमा
पादवन्दनं मनोनन्दनं विदधामि निरन्तरम् ॥
पूजनगुञ्जनचरितादाया
भवति प्रभवति भवतो मया
चरणे च रणेरितसश्रया
प्रणीतिरेषा श्रिनाव्यवेषा समर्पिता सादरम् ॥

नवी दिल्ली १-१-१९६४ श्रीराम ।

# निवेदनम् ।

गीर्वाणसुधाप्रकाशनमालायास्तृतीयमिदं पुष्पं रसिकेभ्य उपह्रियते । पूर्वं प्रकाशनद्वयं रसिकैः सस्पृहं पुरस्कृतमिति धृत्युत्साहसमन्वितैरस्माभिः सानन्दमिदं साहसमनुष्ठीयते ।

द्वे उद्दिष्टे गीर्वाणसुधाप्रकाशनस्य । भारतेषु सर्वभाषासु प्रचलितायां सुलभशब्दसंपदं संगोपनं भाविभारतीभूत्या इति प्रथमम् । अन्यच्च । परदेशीया भारतसंस्कृतिपरिशीलनार्थं गीर्वाणग्रन्थानेवाद्याप्यालोडयन्ति । अतो भाविभारती यावत् स्वर्सिंहासनमलङ्करोति तावदस्मत्संस्कृतिदर्शनं गीर्वाणवाण्यामेवाविरतमाविष्क्रियेत । यत्साफल्यं गीर्वाणसुधाप्रकाशनेनात्र साधितं तद्रसिका जानन्त्येव ।

विना द्रव्यसाहाय्यमेव गीर्वाणसुधाप्रकाशनं समारब्धम् । केन्द्रशासनेन 'कालिदासचरित'-पुस्तकानि क्रीत्वा भारतेषु संस्कृताध्ययनसंस्थाभ्यः संप्रेषितानीत्युपकृता स्म ।

संगीतसौभद्रं कालिदासचरितं च केन्द्रशासनसाहाय्यात् प्रयुक्ते देहल्यां गताब्दे वसन्ते । महाराष्ट्रशासनेनापि संगीतसौभद्रं मुम्बापुर्यां देहल्यां च प्रयोजितम् । तत्रापि सर्वप्रमुखवृत्तपत्रैः प्रयोगक्षमता, सुगमशैली संगीतमाधुरी च प्रशंसिता । गीर्वाणनाट्यप्रयोगार्थं च देववाणीमन्दिरं प्रतिष्ठापितमस्माभिः । तद्द्वारा चत्वारि नवनाटकानि चतुर्दशमासावधौ प्रयुक्तान्याकाशवाणीपुरस्कृतानि । तेषु द्वे अत्र प्रकाश्येते कैलासकम्पः स्वातन्त्र्यलक्ष्मीश्च ।

अस्मिन् ग्रन्थे रणेनापि स्वातन्त्र्यरक्षणं नाहिंसाव्रतविरुद्धमिति प्रमुखत्वेन प्रतिपाद्यते । अस्य प्रकाशने इन्टरनॅशनल अकादमी ऑफ् इन्डियन कल्चर इत्याख्यसंस्थया साहाय्यं कृतमतस्तस्यै धन्यवादान् नितराम । अस्मदुद्दिष्टसफलताकृते च रसिकसुहृदः सप्रश्रयं प्रार्थयामहे ।

गुरुसंस्कृतिरश्मिसंपदा
रचयेत् सान्द्ररसार्द्रशारदा ।
नववर्णरसं शरासनं
ननु गीर्वाणसुधाप्रकाशनम् ॥

इति ।

मुम्बापुरी
१-१-६४

सुधा बेलणकर

# *In Defence*

गौरवोद्धारहाराय गुरुगर्वप्रहारिणे
गीर्वाणवाग्विहाराय हरये गुरवे नम. ॥

This book contains three plays about war Two of them have been broadcast through the A I R The plays are unusual in several respects, in spite of the common subject of war Thus, one has no hero, another has no heroine, the remaining one has neither Two have music but one has not One takes us a few centuries backwards in time, another a few decades, while still another brings us down to the present and yet perhaps takes us away the farthest Two have a uniform scene of action while the third has each act in a different place One mentions arrows, the other bullets and cannons and the third hand-grenades and bombs, One deals with Kings and queens, another with Gods and deities, the third with men and women on a lower plane Similarities and differences can thus be multiplied considerably by studious readers but they all depict the attitude of our people towards war, which is we do not want war, we do not provoke it but if it is thrust on us, we shall not shirk it but fight it boldly, only to turn back after its end to a peaceful existence Strategically it may be a set-back to be always on the defence in a crisis, but there we are

Each play has its short introduction and hence it is not necessary to deal with individual plays here After the publication of Kalidasa-Charitam I was considerably handicapped due to the change in my residence from Bombay to New Delhi and consequently the publication of this book was delayed for a considerable period I am thankful to the Geervana Sudha Prakashanam for bringing it out now

The first play was written in a few days time in Madras in February, 1962, the second was written in New Delhi in January, 1963, the third was written in Calcutta in March, 1963 Their chronological order has been preserved in printing

The duration of the first play would be about 2 hours on the stage, while the other two would require an hour each On the A I R, they were pressed into 30 minutes each

Acknowledgments are due to the All-India Radio for their co-operation in producing the two plays They also have welcomed their publication The Nirnaya Sagar Press of Bombay, as usual, has done excellent work in printing and thanks are due to them I have also to acknowledge my gratitude to Shri Mama Saheb Warerkar, M P, renowned for his literary creations, who has been actively associating himself with producing these plays of mine I also take this opportunity of thanking the artists, whose names are printed elsewhere, for their willing and capable co-operation in producing the plays on the A I R

Lastly,

रणश्रीरङ्गे सचरतु प्रतिवीरस्य जयिनी
रणे श्रीरङ्ग स्यात् खलरिपुवधे भारतसख ।
रणश्री रङ्गेऽस्मिन्नवतरति मद्वान्वयहिते
रणश्रीरङ्गोऽसौ भवतु जनशौर्याम्बुधिशशी ॥

इति ।

New Delhi 1-1 1964 — S B VELANKAR

# अनुक्रमणी ।

# पार्श्वभूमिः।

खिस्ताब्दानामष्टशतकस्योत्तरार्धे बौद्धमतखण्डनानन्तरं वैदिकः कर्माचारो भगवद्गीताप्रोक्तः संन्यासश्च पुनः प्रस्थाप्यमानौ बभूवतुः। यत् तदा विचाराणामाचाराणां च संमिश्रणमासीत्तस्येदं कृतं दर्शनम्।

राजान एव तदा लोकप्रतिनिधित्वमकुर्वन्। अतस्त एवात्र प्रयुक्ताः। आचारविचारनीतिधुरीणास्त आसन्।

भौगोलिकरूपकमत्र स्पष्टमेव। चण्डप्रतापस्य ( सूर्यस्य, पक्षेऽयोध्यापतेः ) तनया, हिमानी-( हिमसंहतिः, पक्षेऽयोध्याराज्ञी )-संभवा कालिन्दी ( यमुना-नदी, पक्षे राजकन्या ) समार्गेण वङ्गसागरं गन्तुमसमर्था ( पक्षे वङ्गराजप्रेम-विघ्निता ) मन्दाकिनी-( गङ्गानदी, पक्षे भगिनी )-परिवारेण निगूढा ब्रह्मपुत्री-( पक्षे ब्रह्मपुत्रा नदी )-सहाया वङ्गराजेन सयुज्यते।

हिंसाऽहिंसाविवेकः प्रधानविषयः।

सर्वपात्राणि कल्पनाजन्यानि नत्वैतिहासिकानि नापि घटना इतिहास-निर्दिष्टाः। भारतीयैराचारविचाराणामैक्यं कथं च मृग्यते तदप्यहिंसाहिंसा-विवादेन नाटकेऽस्मिन् दर्शितम्। प्रार्थये च—

विचरितोच्चरिताऽऽचरितादिना
सकलसज्जनकार्यपरंपरा।
विविधतां परिरक्ष्य जनप्रियां
प्रतनुतामचनौ हृदयैकताम्॥

रसिकानां विनतः

श्रीरामः।

# *Kalındı*

Kalındı ıs ı Nıtıl ı ıccordıng to भरत s नाट्यशास्त्र because ıt hıs only three acts This dıstınctıon however, hıs lost ıts sıgnıficınce ın modern tımes when short plıys ıre more suıted to the tıste (ınd pıtıence) of modern audıences

The bısıc story ıs ı personıficıtıon of the Geographıcal feıtures of Northern Indıı कालिन्दी or the rıver Yımuna ıs the sıster of मन्दाकिनी the rıver Gıngı Both ıre dıughters of the Snow Gangı the elder one is happıly mırrıed ınto the Mıgadhı famıly ınd the younger one des res to unıte wıth the Wıngas Thwarted of her ımbıtıon she plunges ınto the rıver Gıngı ınd secretly travels to Bengal and jo ns the Bıy

The Sun ıs the kıng चण्डप्रताप of अयोध्या (U P) and the queen हिमानी (Snow) ıs hıs wıfe सुधांशु The Kıng of Magıdhı ınd the husband of मन्दाकिनी ıs wedded to the prıncıples of Ahımsa by a famıly trıdıtıon dıtıng from Buddhıst hegemony दुर्गेश्वर the kıng of वङ्ग belıeves ın the sıcr fice of the lıvıng on ıccount of fımıly tradıtıon ınd hence ıs not welcome ıs ı brother-ın-law to the kıng of Mıgıdha दुर्गेश्वर takes exceptıon to thıs ınsult of hıs rıce and offers to fight a duel सुधांशु a firm belıever ın Ah msa refuses to enter a fight Unable to obtıın sıtısfactıon for ınjured honour दुर्गेश्वर decıdes to attack Magıdha The kıng of Magıdha refuses to fight the enemy and prepares to welcome hım ın पाटलिपुत्र the cap tal The Councıl of Mınısters refuse to obey the kıng and prepare for ı defensıve war सुधांशु ıbdıcates मन्दाकिनी ıssumes the leıdershıp of the caretaker government ınd enters the battlefield ıs the Commander ın -Chıef of ıll forces

चण्डप्रताप as well as सुधांशु endeavour to avert wır by offerıng themselves as hostages चण्डप्रताप offers h s l ıngdom as well दुर्गेश्वर however accepts the offer of मन्दाकिनी and decıdes to take her as a prısoner untıl सुधांशु ıccepts hım as a brother ın law सुधांशु no longer a kıng offers to fight दुर्गेश्वर as ı husbınd defend ng the honour of hıs wıfe दुर्गेश्वर then desıres to know how thıs conduct ıs compatıble wıth Ah msa Just then news ıs receıved thıt beıng exısperated at the turn of events कालिन्दी drowns herself ın the rıver Ganga thus personıfyıng the confluence at Prıyagı

The classical music has not been introduced in this play which uses metres in the traditional style, viz अनुष्टुभ्, इन्द्रवज्रा, उपजाति, उपेन्द्रवज्रा, औपच्छन्दसिक, द्रुतविलम्बित, पृथ्वी, भुजङ्गप्रयात मन्दाक्रान्ता, मालिनी, वसन्ततिलका, शार्दूलविक्रीडित, शालिनी, स्रग्धरा, and हरिणी

The play has a duration of about two hours only on the stage though the story occupies about a year The number of characters is very limited The two priests also typify the conflict between the karma and the Sanyasa which prevailed after the efforts of the revered Shri Śankaracharya in the eighth century A D

The play was read with care and interest by Dr Prof G V Devasthali, M A, Ph D Professor of Sanskrit H P T College, Nasik I am indebted to him for his suggestions

Geervana Sudha Prakashan has undertaken another venture with this book—I am grateful to the International Academy of Indian Culture, but for whose help it would not have been possible for them to publish the book so early Nirnaya Sagar Press has, as usual, bestowed all attention on this book and my thanks are due to them

Lastly,

अहिंसा हिंसा वा भवति मम भूमेर्हितपरा
तथा मीमांसाया उपनिषदहो किं प्रियतरा ।
विवादेष्वेतेषु प्रभवतु मतिस्त्वद्य विदुषां
ममैषा कालिन्दी रसिकसुहृदां स्यादभिमता ॥

*New Delhi,*
*30-11-63*

S B Velankar

## पात्रयोजना।

| | |
|---|---|
| राजा चण्डप्रतापः | अयोध्यापतिः। |
| हिमानी | तस्य पत्नी, अयोध्याराज्ञी। |
| सुधांशुः | मगधनाथः अहिंसाव्रतः। |
| मन्दाकिनी | सुधांशुपत्नी, अयोध्यापतिदुहिता। |
| दुर्गेश्वरः | वङ्गराजः शक्तिभक्तः। |
| कालीप्रसादः | अयोध्याराजपुरोहितः कर्मकाण्डी। |
| कैलासदासः | अन्य आचार्यः संन्यासाभिमानी। |
| | अन्ये द्वारपालाः। |

[ नात्र कालिन्दी चण्डप्रतापस्य द्वितीया कन्या रङ्गेऽवतरति। ]

*

## स्थलनिर्देशः।

| | |
|---|---|
| प्रथमाङ्कः | अयोध्यापतिप्रसादे। |
| द्वितीयाङ्कः | बहिःपाटलिपुत्रं वङ्गराजशिविरे। |
| तृतीयाङ्कः | वङ्गराजप्रासादे। |

*

## कालनिर्देशः।

[ खिस्ताब्दानामष्टमे शतके, उत्तरार्धे। ]

| | |
|---|---|
| प्रथमाङ्कः | शरदि मध्याह्नपूर्वकाले। |
| द्वितीयाङ्कः | हेमन्ते मध्याह्ने। |
| तृतीयाङ्कः | शिशिरे सायम्। |

# का लि न्दी ।

## १

नान्दी ।

कालिन्दीवारिधारा निजचरणरजःखण्डिता येन नीता
वन्यायोध्याधिराज्यात् परिचितमथुरा गूढमन्दाकिनीगा ।
संश्लिष्टा ब्रह्मपुत्र्या मगधपरिसरात् कान्तवङ्गाब्धिसङ्गं
वन्दे तं बालकृष्णं दिनमणिदुहितुर्बान्धवं गोकुलस्थम् ॥ १ ॥

( नान्द्यन्ते )

[ प्रविशतो विवदन्तौ शास्त्रिणौ कर्मकाण्डाभिमानी कालीप्रसादो ज्ञानयुक्त-संन्यासमभिमन्यमानः कैलासदासश्च । अयोध्यापतिप्रासादसमीपं त्वरमाणः कालीप्रसादः कैलासदासेनानुगम्यते । ]

**कैलासदासः**—भोः कालीप्रसाद, तिष्ठतु भवान् क्षणमात्रम् । कुत्र गम्यते त्वरयेव ।

**कालीप्रसादः**—( परावृत्य ) प्रासादे राजकन्याकालिन्दीविवाहः प्रस्तूयते । तत्रोपस्थातव्यं मया । कथमितो भवान् ।

**कैलासदासः**—मयापि तत्रैव गन्तव्यं नाम ।

**कालीप्रसादः**—भोः कैलासदास, संन्यासं प्रशंसतो भवतः कुतो विवाहविधौ रसः ।

## पात्रयोजना ।

| | |
|---|---|
| राजा चण्डप्रतापः | अयोध्यापतिः । |
| हिमानी | तस्य पत्नी, अयोध्याराज्ञी । |
| सुधांशुः | मगधनाथः अहिंसाव्रतः । |
| मन्दाकिनी | सुधांशुपत्नी, अयोध्यापतिदुहिता । |
| दुर्गेश्वरः | वङ्गराजः शक्तिभक्तः । |
| कालीप्रसादः | अयोध्याराजपुरोहितः कर्मकाण्डी । |
| कैलासदासः | अन्य आचार्यः संन्यासाभिमानी । |
| | अन्ये द्वारपालाः । |

[ नात्र कालिन्दी चण्डप्रतापस्य द्वितीया कन्या रङ्गेऽवतरति । ]

※

## स्थलनिर्देशः ।

| | |
|---|---|
| प्रथमाङ्कः | अयोध्यापतिप्रसादे । |
| द्वितीयाङ्कः | बहिःपाटलिपुत्रं वङ्गराजशिबिरे । |
| तृतीयाङ्कः | वङ्गराजप्रासादे । |

※

## कालनिर्देशः ।

[ खिस्ताब्दानामष्टमे शतके, उत्तरार्धे । ]

| | |
|---|---|
| प्रथमाङ्कः | शरदि मध्याह्नपूर्वकाले । |
| द्वितीयाङ्कः | हेमन्ते मध्याह्ने । |
| तृतीयाङ्कः | शिशिरे सायम् । |

कालीप्रसादः—ननु मन्यते भवान् वंशपरंपरागतानां न श्रुतिस्मृत्यध्ययनमिति।

अयोध्यायां प्रसिद्धं नो वासिष्ठं श्रेष्ठशास्त्रिणाम्।
कैलासदास जानीथाः कुलं काले कलेरपि॥ ३॥

कैलासदासः—

प्रतिसृष्टिविनिर्मातुर्विश्वामित्रस्य वंशजाः।
वयमेवं विजानीयाः किमतो वचनान्तरैः॥ ४॥

कालीप्रसादः—राजर्षिः स विश्वामित्रः। अत एवैष ब्रह्मर्षिं वसिष्ठं दिद्विषे। तस्य कुलजो भवान् कथं मया सह साधर्म्यं प्रवक्ति। नैतस्मिन् विवाहकार्ये भवता प्रयोजनम्। प्रतिनिवर्ततां भवान्।

कैलासदासः—अधुनैव गत्वा देवीं पृच्छामि कुतोऽत्राहूतो बदरीनाथाश्रमादेतदपरोत्तरवचः श्रोतुमिति।

कालीप्रसादः—गम्यताम्। सुखेन गम्यताम्। भवत्प्रियः संन्यास एव भवतो गतिः।

कैलासदासः—

वदामि सत्यं भवतो हिताय
कदापि यायां न पुरादकस्मात्।
भवेयमत्रैव पुरोहितोऽहं
भवांश्च मन्येत ममाधिकारम्॥ ५॥

[निष्क्रान्तः।]

कालीप्रसादः—मयापि महाराजं द्रष्टुं गन्तव्यम्। तत्रास्मिन् विषयेऽपि किंचनोपन्यसनीयम्। कथं कुलागतपुरोहितत्वं संन्यासमभिमन्यमानस्य संक्रान्तव्यम्।

कुलागतं नाम पुरोहितत्वं
कदापि नान्येन ममापहार्यम्।
कैलासदासो बदरीपदस्थः
कथं हरेद् भाग्यमितो मदीयम्॥ ६॥

[निष्क्रान्तः।]

[ ततः प्रविशति निजप्रासादस्थितोऽयोध्यापतिश्चण्डप्रतापः । तस्य महिषी देवी हिमानी संनिहिता । ]

**राजा**—देवि, कालिन्दीविवाहं वङ्गराजेन दुर्गेश्वरेण सह निश्चित्य निर्वृतो भवेयम् ।

**हिमानी**—यथा ज्यायसी कन्या मन्दाकिनी मगधराजेन सुधांशुना सह सुखेन निवसति तथैव कनीयसी कालिन्दी वङ्गराजेन सह सुखिनी भवतु ।

**राजा**—प्रथमो जामाता मगधराजोऽपि वङ्गाधिपेन सह संबन्धमभिमन्येत ।

मगधपतिना मन्दाकिन्याः करग्रहणं कृतं
समरनिपुणं कालिन्दी मे लभेत तथा पतिम् ।
परिणयविधौ संवृत्तेऽस्मिन् कृतार्थसमाहितो
मुदितमनसा वानप्रस्थं श्रयेयमहं प्रिये ॥ ७ ॥

( मन्दाकिनी प्रविशति । )

**मन्दाकिनी**—तात, अभिवादये । अम्ब, भवतोर्दर्शनार्थं मगधराजः समुपैति ।

**हिमानी**—ननु ते भर्ता कालिन्दीविवाहनिश्चयमभिनन्देत्? रोचेतास्मै वङ्गनृपसंबन्धः?

**कालीप्रसादः**—( सहसा प्रविश्य ) नेदं मे रोचते महाराज । कथं कुलपुरोहितोऽवमन्यते ।

**मन्दाकिनी**—किं सहसा जल्पसि रे शास्त्रिन् । किं न ते रोचते ।

**कालीप्रसादः**—क्षन्तव्योऽविनयो दासस्य महाराज ।

**राजा**—ब्रूहि विश्रब्धम् । का ते चिन्ता ।

**कालीप्रसादः**—देव, नवागतोऽयं संन्यासवादी कैलासदासो मामवमन्यते ।

**हिमानी**—विद्वान् स विप्रः । मया सबहुमानमानीतोऽस्मिन् विवाहविषये सर्वं यथोचितं संपादयितुम् । किं कृतं तेन ।

**कालीप्रसादः**—कथमिदं सह्यते देव ।

सेवा कृता मम कुलेन वसिष्ठजेन
स्थित्वा पुरोहितपदे कुलधर्मकार्ये ।
किं न्यूनमत्र विदितं भवता महीप,
आनीयते यदपरो मम शत्रुरत्र ॥ ८ ॥

राजा—भवानेव कुलपुरोहितः। मा ते शङ्का। द्वितीयोऽयं पण्डितः केवलं भवतः सहायः।

द्वारपालः—(प्रविश्य) मगधराजो द्वारि समुपस्थितः। देव, भवद्दर्शनं याचतेऽसौ।

राजा—प्रवेशय सत्वरमेनम्।

(द्वारपालो निष्क्रान्तः। सुधांशुः प्रविशति।)

सुधांशुः—आर्य वन्दे। देवि, वन्दे।

राजा—(उपसृत्य) चिरं जीव जामातर्। उपविशतु भवान्।

(सर्वे चोपविशन्ति।)

सुधांशुः—वङ्गेशोऽपि भवद्दर्शनार्थी समायातोऽयोध्यायामिति श्रुतमस्माभिः।

राजा—सत्यमेतत्। पुरोहित, वङ्गराजोऽत्राहूतव्यः।

कालीप्रसादः—यथाज्ञापयति महाराजः।

(सर्वान्प्रणम्य निष्क्रान्तः।)

सुधांशुः—मन्ये न किंचिद् दुष्करं समुपस्थितं यतो भवता वङ्गेश्वरः प्रसाद्यते।

राजा—न दुष्करं किमपि। मङ्गलं संपद्यते।

सुधांशुः—कथमिव।

राजा—जानाति भवान् भवच्छ्यालकीमस्मत्कन्यां कालिन्दीम्। अस्या भर्तृत्वेनापेक्ष्यते वङ्गराजोऽस्माभिः। भवानपि तेन हेतुनैवाहूतः। सम्यग्विमृश्यैवैतत्करणीयम्।

(राजा तमवेक्षते। स तूष्णीं तिष्ठति।)

मन्दाकिनी—रोचतेऽयं संबन्धो भवते, नाथ।

सुधांशुः—नात्र विषये किंचिद्वक्तुमिच्छामि।

हिमानी—ज्यायाञ्जामाता भवान्। कथं न वचनाय स्पृहयति। अस्मद्धितं हि भवतोऽभिप्रेतं नाम। यदि किंचिन्न्यूनाधिकं दृश्यते भवता तदावेदनीयमेव।

सुधांशुः—किमुद्दिश्य वङ्गराजो जामातृत्वेन निश्चीयते।

हिमानी—राजाऽसौ तरुणो दर्शनीयश्च।

राजा—वयं कन्यासौख्यहितैषिणः। ज्ञातमेव सर्वैर्यत्—

माता वित्तमपेक्षतेऽथ जनको विद्याश्रुतादीहते
सौन्दर्यान्वितदेहसौष्ठवमहो कन्या वृणोत्यत्र च ।
आप्तैः श्रेष्ठकुलीनता प्रथमतः संबन्धिषु प्रार्थ्यते
तस्मादस्मदभीप्सितो नरपतिर्वङ्गेशदुर्गेश्वरः ॥ ९ ॥

अतस्तेन संबन्धोऽभिमतो नः । कथं मन्यते भवान् ।

**सुधांशुः**—नैनं निश्चयमभिनन्दितुं प्रभवामि ।

**मन्दाकिनी**—कथमेतन्नाथ । कथं न मन्यसे ननु कालिन्दीसौख्यहेतुमत्र ?

**सुधांशुः**—जानन्ति भवन्तोऽस्मत्कुलवृतमहिंसाव्रतम् । युद्धमभिमन्यमानो मृगयाविहारी वङ्गराजः कथं मे रोचेत । कथं च तेन सह संबन्धमभिनन्दामि ।

शीतच्छायापेक्षया सूर्यतप्तः
पान्थो नेयाद् गेहमग्निप्रदीप्तम् ।
हिंसासक्तं वङ्गनाथं न चाहं
संबन्धित्वेनानुमन्तुं समर्थः ॥ १० ॥

**द्वारपालः**—( प्रविश्य ) देव, वङ्गराजः प्रतीहारभूमिमुपस्थितः ।

**राजा**—प्रवेशयैनमविलम्बेन ।

( द्वारपालो निष्क्रान्तः । दुर्गेश्वरः प्रविशति । )

**दुर्गेश्वरः**—नमोऽयोध्यापतये चण्डप्रतापमहाराजाय । कथं मगधराजोऽप्यत्रोपस्थितः । मगधराज वन्दे । देव्यौ, अञ्जलिं बध्नामि । केन हेतुना निमन्त्रितोऽहमत्र ।

**राजा**—( समुपसृत्य तं हस्तेन गृहीत्वा समीपे निवेशयति । ) स्वागतं भवतो वङ्गराज ।

**दुर्गेश्वरः**—अनुगृहीतोऽस्मि ।

**राजा**—आसीदस्मन्मनीषितं कालिन्दीस्वयंवरार्थे । अस्मत्कनीयसी कन्या कालिन्दी भवता दृष्टपूर्वा । यदा तु मृगयाविहारिणा भवता सा दृष्टा तदाप्रभृति भवन्तं जामातर-मधिगन्तुं मनीषा जाता । अतः स्वयंवरवर्जं यदि विवाहनिश्चये समर्था वयं, तत्सुष्ठु भवेदिति कृत्वाऽऽहूतो भवान् । तथा च प्रथमोऽयमस्मज्जामाता मगध-राजोऽप्यत्रानीतः । तस्य संमतिरपि नूतनसंबन्धेऽपेक्ष्यते ।

**हिमानी**—मम कन्या कालिन्दी भवद्दृष्टिपथमायातैव । न [illegible]
तु श्यामला । तथापि मतिचतुरा, [illegible]वकोमला, [illegible]
सा । तस्याः स्वीकारेण धन्यानस्मा[illegible]

**दुर्गेश्वरः**—कथं मन्यते मगधराजः।

**सुधांशुः**—वङ्गराज, श्रुतमस्माभिः शूरो भवान् धनुर्विद्यापारंगत इति। तथा च कमनीयं वपुः, नवं वयः, राजपदं च। सर्वमिदं स्पृहणीयमेव। तथापि—(विरमति।)

**दुर्गेश्वरः**—अलं स्खलितैः। स्वैरं भाषतां भवान्। अयोध्यापतेर्ज्यायाज्जामाता न तस्य हितादन्यदपेक्षेत।

**सुधांशुः**—नाहमेनं विवाहमभिनन्दितुं शक्नोमि।

**दुर्गेश्वरः**—(सविस्मयं) कथमिव।

**सुधांशुः**—मगधा अहिंसाव्रताः। यद्यपि न वयं बौद्धमतानुयायिनस्तथापि शाक्यमहामुनेः स्मृतित्वेनाहिंसाव्रतधारिणः पाटलिपुत्रस्था राजानः।

**दुर्गेश्वरः**—सर्वविदितमेतत्। अस्मदार्यधर्मोऽपि 'अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्' इति श्रीकृष्णभगवन्मुखेनाहिंसा दैवीसंपदि प्रथमस्थाने गणयति।

**सुधांशुः**—अतो हिंसामाचरता वङ्गराजकुलेन सह संबन्धो न रोचेत नः।

**दुर्गेश्वरः**—भवताऽयोध्यापतेर्दुहित्रा विवाहः कृतः। तत्किमयोध्यापतिरप्यहिंसाव्रतीति कृत्वा किल ?

**हिमानी**—नाहिंसा व्रतत्वेनाद्रियतेऽस्मत्कुले।

**सुधांशुः**—सत्यमेतत्। तथापि न हिंसापि व्रतत्वेनाङ्गीक्रियतेऽयोध्यायाम्।

**दुर्गेश्वरः**—नैतदवधारये। किं क्रियतेऽस्मत्कुलेन।

**सुधांशुः**—शक्तिभक्ता न हिंसा परिहार्या मन्यन्ते।

**दुर्गेश्वरः**—(उत्थाय) ज्ञातमधुना भवदभिप्रेतम्। सत्यं शक्तिमातृपूजायां क्रियते हिंसा। तत्किं भवान् श्रुतिप्रणीतं यज्ञयागादि नैव समाचरति।

**सुधांशुः**—हिंसाविहीन एवाचारः स्वीक्रियतेऽस्माभिः।

**दुर्गेश्वरः**—परचक्राभिगमे किं मगधेश्वरो हिंसात्मकं युद्धं नाङ्गीकुर्यात्।

**सुधांशुः**—न युद्धाङ्गीकार आवश्यक एव मगधानाम्। सर्वराजमण्डले श्रेष्ठस्थानाधिष्ठिता मगधाः।

**दुर्गेश्वरः**—क एवं मन्यते।

**सुधांशुः**—सर्वेषां संमतमेतत्।

दुर्गेश्वरः—अयोध्यापते, यावदियं मगधराजदर्पोक्तिरबाधिता तावन्न विवाहमङ्गी-
कर्तुमुत्सहे।

सुधांशुः—कथं निराकरिष्यति भवान् ममोक्तिम्।

दुर्गेश्वरः—राजमण्डले भवदनुरूपस्थानं भवन्तं प्रापय्य।

सुधांशुः—किमिदं स्थानं नाम।

दुर्गेश्वरः—मगधराज,

अरिकुलहननैर्यै राज्यसंवर्धनाय
दिशि दिशि चिरकालं यत्यते राजवृन्दैः।
ननु मगधपतेस्ते न्यस्तशस्त्रस्य कुर्यु-
स्तृणलववदवस्थां वह्नयो दीप्तिमन्तः॥ ११॥

सुधांशुः—वङ्गाधिप, वत्स एव भवानद्यापि।

पृथ्वीपानां मण्डलेऽयं सुधांशुः
स्थाने श्रेष्ठे राजभिर्यैर्नियुक्तः।
भीत्या नैतत्संगतं वङ्गराज,
प्रीत्या सर्वैर्मानितोऽहं धुरिस्थः॥ १२॥

दुर्गेश्वरः—

यदा संगरोऽत्र प्रसज्येत रौद्रो
धनुर्वश्च तिष्ठेत् टणत्कारशून्यम्।
अहिंसाप्रमाणं न भूपा भवन्तं
सहेरंस्तदा सर्वसेनाधुरिस्थम्॥ १३॥

सुधांशुः—कथमेवं मन्यते भवान्।

क एकः प्रशास्ता रणाग्रं प्रवेष्टा
शरीरी धरामण्डलारातिरेवम्।
अहिंसाप्रतिज्ञा गृहीता नरेन्द्रै-
र्न ते शान्तिमङ्गार्थमुत्कण्ठिताः स्युः॥ १४॥

**दुर्गेश्वरः**—मगधानां पते,

अलमयं किल वङ्गनृपो रणे
विरहितो हि सहायबलैरपि।
मगधराज, धराजलदेवता-
ङ्कितनेत्रयुताः समरे मम ॥ १५ ॥

**सुधांशुः**—अयोध्यापते,

मदभरेण नरेण यदुच्यते
ननु बुधैर्वचनं तदुपेक्ष्यते।
न च यतः कथनीयमतः परं
तदभिवाद्य वरं गमनं मम ॥ १६ ॥

अयोध्याधिप, नाहमत्र स्थातुमुत्सहे। तत्क्षन्तव्यम्। (निष्क्रान्तः।)

**राजा**—वत्से मन्दाकिनि, भर्तारं सान्त्वयित्वा प्रत्यानय।

**मन्दाकिनी**—जानामि भर्तृस्वभावम्। न स मम वचनं क्रोधाविष्टोऽनुमन्येत।

**राजा**—देवि, गन्तव्यमावाभ्यां मगधराजस्य क्रोधनिरासाय।

(राजा देवी च निष्क्रान्तौ।)

**दुर्गेश्वरः**—आर्ये मन्दाकिनि, क्षम्यताममर्यादा।

**मन्दाकिनी**—भवानेव नः क्षन्तुमर्हति। अत्र निमन्त्रितो भवानस्माभिः।

**दुर्गेश्वरः**—ननु भवत्यै रोचते मया सह कालिन्दीदेव्या विवाहः।

**मन्दाकिनी**—अथ किम्।

**दुर्गेश्वरः**—तर्हि सर्वप्रयत्नैरेष विवाहो घटयितव्य एव।

**मन्दाकिनी**—कथं वर्तिष्यते भवान्।

**दुर्गेश्वरः**—यथावसरं ज्ञास्यति भवती। अत्रैतत्पुरोहितद्वयमागच्छति।

(कालीप्रसादकैलासदासौ प्रविशतः।)

**कैलासदासः**—महादेवी कुत्र वर्तते। (मन्दाकिनीं दृष्ट्वा) आर्ये वन्दे।

**कालीप्रसादः**—आर्ये अभिवादये। आहूतो ननु महाराजेन?

(राजा देवी च प्रविशतः।)

**राजा**—वङ्गराज, न मगधेश्वरः समाहितः। स पाटलिपुत्रं प्रस्थितः। अत एतद्विवाहकार्यं संप्रति नोचरितुमपि शक्यम्। तत्क्षन्तव्यमेतत्।

दुर्गेश्वरः – राजन्, यावन्न मगधराज एतं विवाहमभिनन्दति तावन्नाहमपि तं काङ्क्षामि । अपि तु भवतेदमवधारणीयम् ।

यावच्चण्डप्रतापो विलसति गगने लोककल्याणभर्ता
यावच्चैवं सुधांशुर्विहरति नभसः प्राङ्गणे शान्ततेजाः ।
यावद् दुर्गेश्वरोऽयं वहति भुजयुगे वङ्गराज्यस्य लक्ष्मीं
तावद्राज्ञीपदे मे भवदमलसुतास्थापने स्यान्मनीषा ॥ १७ ॥

तथा हि,

नान्याङ्गना मे महिषी भवित्री
नान्या च वङ्गश्रियमाश्रयन्ती ।
कन्या ह्ययोध्याधिपतेर्द्वितीया
धन्यां च कुर्वीत ममायुराशाम् ॥ १८ ॥

तदामन्त्रये भवतः । (निष्क्रान्तः ।)

कालीप्रसादः – देव —

कैलासदासः – देवि, —

राजा –
हिमानी – } किमेतत् ।

कालीप्रसादः – अहमेव कुलोपाध्यायोऽत्र तथाप्ययं—

कैलासदासः – देवि, बदरीनाथाश्रमादानीतोऽहं भवत्या विवाहपौरोहित्याय । तथाप्ययं—

राजा – कुतोऽधुना विवाहमङ्गलम् । उभावपि गत्वा कालिन्दीजन्मपत्रिकां सम्यक् परीक्ष्य कदैतन्मङ्गलं संपद्येत तद् भवन्तौ कथयताम् । यस्य निरूपणं सत्यं परिणमेत्स एव पुरोहितत्वे नियुज्येत ।

कालीप्रसादः – भोः कैलासदास,

नभःस्थमहाणां गतीस्ताः पठित्वा
पटुत्वं लभस्वात्र कैलासदास ।
उपाध्यायकार्यमहं मुञ्च कामं
प्रजेर्मासतामस्य नो चेद् द्विजाङ्क ॥ १९ ॥

**कैलासदासः**—देवि,

> अत्रागतोऽहं भवदाश्रयैवं
> गृह्णातु सेवां भवती स्वमूल्यात्।
> औदार्यमूर्तिर्ननु युक्तकाले
> न विस्मरिष्यत्यपि सेवकं माम्॥ २०॥

(उभौ पुरोहितौ निष्क्रान्तौ।)

**राजा**—क्व नु गतो वङ्गाधिपो भवेन्मन्दाकिनि।

**मन्दाकिनी**—मन्ये स निजराज्यं प्रतिनिवर्तेत।

**हिमानी**—ननु मन्यतेऽसाववमतमात्मानम्।

**मन्दाकिनी**—अथ किम्।

**राजा**—नूनं कृच्छ्रे निपतिता वयम्। न जानीमः कुत उद्धरणं स्यात्।

**हिमानी**—कथं वा कालिन्दी मन्येत।

**राजा**—मन्दाकिनि, इमं वृत्तान्तं त्वमेव कालिन्दीबालायै कथयस्व।

**मन्दाकिनी**—भृशं व्यथिता स्यात् सा। वङ्गेश्वरेण सह विवाहस्तस्या अभिमत आसीत्।

**राजा**—यच्च तया मनीषितं तदपि नो निरूपय।

**मन्दाकिनी**—अहमपि भर्त्रा सार्धं मगधान् गमिष्यामि।

**राजा**—कष्टमेतत्।

**हिमानी**—मन्दाकिनि, स्वभर्तारमपि विशेषतोऽनुनय। कालात्ययेन संमन्येतैतं विवाहम्। न जाने किमथवा संपद्येत। कालिन्दीकृते ताम्यति मे हृदयम्।

**राजा**—उभे गत्वा तां विनोदयतम्।

**मन्दाकिनी**—साधु। अम्ब, एहि। (उभे निष्क्रान्ते।)

**राजा**—सर्वथा कष्टं खलु कन्यापितृत्वम्। यत—

> यदिह कुरुते श्रेयो मत्वा पिता तनयाकृते
> हितकरमिदं नान्यैः कैश्चिन्मतं तु हितार्थिभिः।
> अथ न स निराकर्तुं शक्तः स्वयं कृतमन्यथा
> प्रतिदिनमतश्चिन्ताज्वाला शनैः प्रदहत्यमुम्॥ २१॥

( ततः प्रविशति दुर्गेश्वरः । )

**दुर्गेश्वरः**—राजन्, अवमतोऽहं हीनाचार इति मगधेश्वरेण। न शक्तेरुपासक एतत्सहते। अतः खड्गद्वन्द्वाय धनुःशरद्वन्द्वाय वा मयाऽऽहूतो राजा सुधांशुरहिंसामिषेण युद्धं निवारयति। नातो विना युद्धं विरमामि। भवतो जामाता स इति कृत्वा भवते निवेदयितुमिदमहमत्रागतः। वङ्गमगधानां समरमपरिहार्यं जानातु भवान्।

( पुनः प्रविशति मन्दाकिनी । )

**मन्दाकिनी**—तात, मगधानभियास्यति वङ्गसेनेति श्रुतं मया। जानाति भवानहिंसाव्रतस्थो मे नाथो न युद्धं करिष्यति। अतो न जीवनाय स्पृहयामि।

**दुर्गेश्वरः**—आर्ये, न भवतीं दुःखभागिनीं कर्तुमुत्सहे। यदि भवती याचते तन्न युद्धं समादिशामि।

**मन्दाकिनी**—न चण्डप्रतापस्य कन्या सुधांशोः पत्नी मगधानां च राज्ञी जीवनं याचते। यदि मगधनाथो न युध्येत तथापीयं मन्दाकिनी मगधसैन्याधिपत्यं स्वीकृत्य स्वयं समराङ्गणमवतरेत्।

**दुर्गेश्वरः**—कथं भवती वीरवद् युध्येत।

**मन्दाकिनी**—अथ किम्।

स्रस्तं धनुः स्यान्न करात्कदाचि-
च्चित्तं न वा स्यात्परिहीनधैर्यम्।
रणे रिपुर्यो महितो हि तेन
नापेक्षणीया च दया मदीया॥ २२॥

**दुर्गेश्वरः**—न वङ्गेश्वरो ललनया सार्धं युध्यते।

कथं वह्निं दध्यान्मृदुकुसुमकोशे मम करः
कथं वा वृष्टिं तां हिमकणमयीं पद्मनिलये।
कथं वाणी ब्रूयादशुभवचनं दैवतपदे
*कथं तद्वद् युद्धं प्रभवति भवत्या सह मम॥ २३॥*

**मन्दाकिनी**—यदि भवान् मगधानभियास्यति तर्हि मया सार्धं युद्धं न परिहार्यं भवतः।

धृत्वा धनुर्यावदहं रणाग्रे स्थिता न तावद्विजयो रिपोः स्यात्।
कृत्वा स्वकार्यं मगधप्रजानां हिताय देहोऽपि पतत्वयं मे॥ २४॥

**हिमानी**–(प्रविश्य)–नाथ, वङ्गराजो मगधानभियास्यतीति श्रूयते ।

**दुर्गेश्वरः**–सत्यमेव श्रुतं देव्या ।

**हिमानी**–न पुनरस्मज्जामाता युद्धं करिष्यति ।

**मन्दाकिनी**–तथापि मगधानां राज्ञीयं राष्ट्ररक्षणार्थं गृहीतव्रता । मातर् भवदाशिषं याचे ।

(सुधांशुः प्रविशति ।)

**सुधांशुः**–देवि मन्दाकिनि, सत्वरं मगधान् गन्तव्यमितोऽस्माभिः । तदागम्यतां भवत्या ।

**दुर्गेश्वरः**–गम्यताम् । पुनर्मेलनं रणभूमौ भविष्यति ।

**सुधांशुः**–अहिंसाव्रतस्था वयं न रणमाश्रयामः ।

**दुर्गेश्वरः**–यदा भवत्पत्नी धनुःखड्गहस्ता समरमुपयास्यति तदा भवान् किं प्रासादे निवत्स्यति ।

**सुधांशुः**–न मन्दाकिनी युद्धाय प्रवर्तेत ।

**मन्दाकिनी**–नाथ, यदा मगधानां परित्राणं सेनाबलेन कर्तव्यं स्यान्न च सेनाग्रभागे मगधराजो दृश्येत तदा मगधदासीयं भवत्पत्नी समरमवतरेदेव ।

**सुधांशुः**–न स्त्री वीरयुद्धाय प्रवर्तेते ।

प्रमदाः प्रेमदाः सन्तु सदनोपवनादिषु ।
मा तेषां मरणान्तं तद् दारुणं रणमज्जनम् ॥ २५ ॥

**मन्दाकिनी**–ललनापि वीराङ्गना भवति ।

कटाक्षक्षेपपटुतां जानीयादङ्गना न वा ।
चापाकर्षं न परुषं समरे विस्मरिष्यति ॥ २६ ॥

**सुधांशुः**–नैतत्संभवति देवि । नाहं भवत्याः समरव्यापारमनुमन्येय ।

विस्मृत्य मगधेशोऽहमहिंसां कुलपूजिताम् ।
युध्यमानां न भवतीमनुमन्ये कथंचन ॥ २७ ॥

**मन्दाकिनी**–प्रथमतोऽहं मगधानां राज्ञी । पश्चाद् भवत्पत्नी । युद्धसमाप्तौ भर्त्राज्ञाभङ्गपातकस्य निरसनं प्रायश्चित्तं भवत्पादाभ्यां याचिष्ये । (निष्क्रान्ता ।)

**दुर्गेश्वरः**—गच्छाम्यहमपि राजन्। देवि, अभिवादये। आमन्त्रये मगधराज।

अहिंसामनुसृत्यात्र भवतावमतो ह्यहम्।
हिंसासहाययुद्धेन निष्करिष्यामि तत्पुनः ॥ २८ ॥

(निष्क्रान्तः।)

**सुधांशुः**—महान्तमनर्थं निवारयितुमयोध्यापते, वङ्गराजो बन्धे क्षेप्तव्यः। यदि युद्धं न करिष्यामीति प्रतिशृणोति तदैव मोचनीयः।

**राजा**—मगधराज, निमन्त्रितमतिथिं नायोध्यापति. कदापि कष्टेन कृच्छ्रे निपातयेत्। यदि काचिदपि पीडा वङ्गाधिपो मद्राज्येऽनुभूयात्तर्हि ता पीडां समूलमुत्खातुं समर्थं मे बलम्।

**सुधांशुः**—राजन्, न सम्यग्जानाति भवान् किमित आपत्स्यत इति।

**राजा**—न जाने न वा ज्ञातुमुत्सहे। न भवद्वचनमङ्गीकर्तुं, क्षमोऽयं जन.। क्षन्तव्यमेतत्। एहि देवि। कालिन्दीं द्रष्टुं गच्छावः।

(राजा हिमानी च निष्क्रमेते।)

**सुधांशुः**—संदंशपतितोऽहम्।

युद्धं हानिकरं विमृश्य मगधैरुत्सृष्टमेतत् पुरा
नायं वङ्गसमुत्थितं व्यतिकरं रोद्धुं समर्थो जनः।
देवी वा यदि संगरं श्रितवती मन्दाकिनी मागधी
कः स्यादुद्धरणे क्षमोऽत्र दुरिताज्ज्ञाने न तत्किंचन ॥ २९ ॥

(निष्क्रान्तः।)

इति प्रथमोऽङ्कः।

# २

[ बहिःपाटलिपुत्रं चण्डप्रतापशिबिरस्यैकदेशो दृश्यते । एकतः कालीप्रसादो दीर्घां कालिन्दीजन्मपत्रिकां परीक्षमाणः पृष्ठतो गच्छन् प्रविशति । अन्यतस्तथैव कैलासदासः । उभौ परस्परमापततः । 'आ.' इति गदित्वा परावृत्य परस्परं सक्रोधं वीक्षमाणौ पृष्ठतः परायातः ]

कालीप्रसादः – कैलासदास, कथमिदमौद्धत्यम् ।

कैलासदासः – कथं भवतोऽप्ययमविनयः ।

कालीप्रसादः – यदहं राजकन्यापत्रिकायां निरीक्षे तद् गुप्तचरत्वेन ज्ञातुं प्रयतसे ।

कैलासदासः – यं च विवाहमङ्गलमुहूर्तमहं परीक्षे तं चोरयितुमीहसे ।

कालीप्रसादः – कन्याराशिपत्रिकामिमां व्यतिकर्तुं परिश्राम्यसि ।

कैलासदासः – मेषराशिस्था जन्मघटिका कथमन्यथा करोषि ।

कालीप्रसादः – त्वत्कृतपत्रिकायां विद्यास्वामी वक्रीभूतः ।

कैलासदासः – विवाहमङ्गले निश्चीयमाने किं विद्यास्वामिना ।

कालीप्रसादः – तद् वदतु भवान् कदेदं विवाहमङ्गलं संपत्स्यते ।

कैलासदासः – नाहं कथयिष्यामि । भवान् विवाहघटिकामपहरिष्यति ।

कालीप्रसादः – उद्घोषयाम्यहं नासौ विवाहः संभावीति ।

कैलासदासः – अलीकं वदसि । आगामिनि शिशिरर्तौ विवाहोऽयमवश्यंभावीति प्रथयामि ।

कालीप्रसादः – नैतच्छक्यम् । विवाहस्थाने शनैश्चरः प्रतिवसति । कथं स विवाहमनुमन्येत ।

कैलासदासः – यदि न विवाहः संभविता तत्कुतस्ते पौरोहित्यम् ।

कालीप्रसादः – मम पौरोहित्यं जन्मसिद्धं नित्यं च ।

कैलासदासः – न जानाति भवान् समीचीनम् । अहं विवाहमङ्गलमुद्घोषयामि पौरोहित्यं च संग्रहीष्यामि ।

कालीप्रसादः – बदरीनाथाश्रमे भवान् सत्वरमेव स्थापितो भविष्यति । न पौरोहित्ये ।

कैलासदासः – यन्न भवता दृष्टं तन्मया वीक्षितम् ।

कालीप्रसादः – किमेतत् ।

कैलासदासः – वङ्गराजदुर्गेश्वरस्य जन्मपत्रिका ।

कालीप्रसादः – ततः किम् ।

कैलासदासः – तत्र स्पष्टो विवाहयोगः । स चायोध्याराजकन्यावर्जं नान्यामुद्वहेदिति प्रकटं घोषितं तेन ।

कालीप्रसादः – कपटाचार एषः ।

कैलासदासः – कथमिव ।

कालीप्रसादः – अयोध्यापतिना राजकन्यायाः कालिन्दीदेव्याः पत्रिकायाः परीक्षणमात्रतम् । नान्यत् ।

कैलासदासः – तत्तु कृतमेव । तत्रैव शिशिरर्तौ विवाहमङ्गलं स्पष्टं दृष्टिगोचरम् ।

कालीप्रसादः – न मया पत्रिकायां तद् दृश्यते । व्यवहारे वा । अत्र ग्रहाधिपो मगपानभिक्रान्तः । तत्कुतो विवाहमङ्गलम् ।

कैलासदासः – को मतो भवता विवाहस्थानस्वामी ।

कालीप्रसादः – भवतु कोऽपि नाम ।

कैलासदासः – मन्ये न फलज्योतिषं जानाति भवानिति ।

कालीप्रसादः—कथमिमं पुस्तकमाश्रयति भवान्।

कैलासदासः—अधुनैव गत्वाऽयोध्याधिपतये निवेदयामि। ततो मे पौरोहित्यं निश्चितमेव।

कालीप्रसादः—न विवाहमङ्गलं संभवति। न वा पौरोहित्यं भवदीयम्।

कैलासदासः—पश्यतु भवान्। उभयोर्हितं कथयामि।

कालीप्रसादः—कुत एतत्।

कैलासदासः—उभावपि यथार्थं सहकारित्वेन वर्तेवहि तर्हि स्वामिनो भूतिरावयोश्च वृद्धिः।

कालीप्रसादः—विवाहमङ्गलस्य संभवासंभवयोः कुतः सहकारित्वम्।

कैलासदासः—असंभवो मिथ्यैव।

कालीप्रसादः—रे मिथ्याचार, संन्यासवादिन्, कर्माचारनिरतस्य मे तव संन्यासिन सह कुतः संवादित्वम्। याहि बदरीनाथाश्रमम्। अत्र वङ्गमगधानां समरप्रसङ्गे कुतः संन्यासावसरः।

कैलासदासः—तत्किं भवान् पत्रिकां हित्वा खड्गं गृह्णाति। यज्ञोपवीतं विहाय ननु शरासनं परिगृह्णाति।

कालीप्रसादः—अपसरतु भवान् स्वार्थपरायणः संन्यासी। देवी मन्दाकिनी समरोद्यता। अतस्तत्पिताऽयोध्यापतिर्महाराजश्चण्डप्रतापोऽस्याहितं परिहर्तुमत्र संप्राप्तः। तत्कुतो विवाहमङ्गलं कुतश्च पौरोहित्यम्। समये खड्गग्रहणमप्यवश्यं भवेत्।

कैलासदासः—तर्हि देवीं हिमानीमुपसृत्य बदरीनाथाश्रमं प्रतिनिवर्तितुमनुज्ञां याचे। पुनः प्रवृत्ते विवाहमङ्गले प्रत्यागमिष्यामि। किं क्रियते। सर्वं दैवाधीनमेव।

> दैवं यदीयमिह निर्घृणतां वृणोति
> प्राप्नोति स प्रतिदिनं विपदां प्रणालीम्।
> दीर्घप्रवासमनुभूय समागतोऽहं
> व्यर्थश्रमो न हृतवान् मम निर्धनत्वम्॥ १॥

(निष्क्रान्तः।)

कालीप्रसादः—कष्टं सर्वं समापन्नम् । एको विवाहविवेको द्वयो राष्ट्रयोर्विग्रहाय प्रभवति । हिंसाऽहिंसयोर्द्वन्द्वं प्रवर्तयति । आप्तान् रिपुवदाचरयति । मम कर्मवादिनश्च संन्यासवादिना सह कलहं कारयति । स्त्रियं समरशूरा विदधाति । वीरमयोध्यापतिं न्यस्तशस्त्रं संपादयति । धिगिमां जनरीतिम् ।

यया ऽऽस्वाद्यं सौख्यं जनपदभृतं हर्म्यसुलभं
स्थिता संनद्धा सा समरपरिपाटीमनुगता ।
प्रजात्राणं कार्यं रिपुविदलनैर्येन स नृपः
स्वकर्तव्ये मूढो विचलितमना भ्राम्यति पुनः ॥ २ ॥

(निष्क्रान्तः ।)

[ततः प्रविशति निजशिबिरे वीरवेषेण संचरन् दुर्गेश्वरो बहिःपाटलिपुत्रम् ।]

दुर्गेश्वरः—देवी मन्दाकिनी सत्यमेव समरमवतीर्णा । अतो विपदि निपतितोऽहम् । यदि सैन्यं गृहीत्वा वङ्गान् निवर्ते तर्हि ललनया पराभूत इति कलङ्कः । यदि रणप्रसङ्गं करोमि तल्ललनया सार्धं युध्यतेऽयं वङ्गेश्वर इत्यपि जनप्रवादः । न जाने का गतिः समुचितेति ।

सुधांशुनृपतेर्वचो न च मया यतो विस्मृतं
न ह्यावुमथ संगरं खलु विना जयादुत्सहे ।
कथं च बत संमुखीं परिविलोक्य मन्दाकिनीं
शरान्मम धनुः क्षिपेदहह कोमलाङ्ग्यास्तनौ ॥ ३ ॥

[इतस्ततो विषण्णमनसा संचरति । द्वारपाल प्रविशति ।]

द्वारपालः—देव, अयोध्यापतिर्द्वारि समुपस्थितः । 'निःशस्त्रोऽहं दर्शनं याचे' इति ब्रवीति । अतः परं देवः प्रमाणम् ।

दुर्गेश्वरः—सत्वरमेनं प्रवेशय ।

[द्वारपालो निष्क्रान्तः । ततः प्रविशति राजा चण्डप्रतापः ।]

राजा—वङ्गराज, वन्दे ।

दुर्गेश्वरः—राजन्, न भवतो वन्दनापेक्षा । आशिषं प्रार्थये ।

(साञ्जलिः प्रणमति ।)

राजा – कामाशिषं भवते दातुं समर्थोऽहमधुना।

दुर्गेश्वरः – केवलं 'विजयस्व' इति।

राजा – यदा मत्कन्या मन्दाकिनी भवत्संमुखं समरे प्रत्यासन्ना तदा विजयस्वेत्याशिषं कथं भवति वितराणि।

मन्दाकिनीं वीक्ष्य तथा भवन्तं
जयाशया शस्त्रसुसज्जसैन्यम्।
काङ्क्षामि नास्मिन्नजयं जयं वा
वङ्गावनेर्नाथ शरैरथाहम्॥ ४॥

तथापि भवदायुरपि विजयि भवितुमर्हति। अतः कथयामि वत्स 'चिरं विजयस्व' इति।

दुर्गेश्वरः – किमुद्दिश्य भवदागमनम्। उपविशत्वयोध्यापतिः। यद्वोचेत तद्वदितव्यम् भवत्सेवया कृतार्थो भवत्वयं जनः।

राजा – वङ्गराज, जानासि मेऽवस्थाम्। अवमाननिरासापेक्षया भवता मगधा अभिक्रान्ताः। मगधराजोऽहिंसाव्रत इति विदितमासीद् भवतः। तथापि मन्त्रेण निजेप्सितं साधयितुं न यतितं भवता।

दुर्गेश्वरः – अवमानानन्तरं कुतो मन्त्रः।

अवमानेन रुधिरं यस्य नोच्छलति स्वयम्।
योऽथ मन्त्रयते मन्त्रं न स जीवन् नरो नृप॥ ५॥

राजा – तथा च मगधभयं दृष्ट्वा मगधाधिदेवता मत्पुत्री मन्दाकिनी प्रजाः समाश्वास्य, अहिंसां कुलव्रतं समुत्सार्य, वीरोचितवेषं परिधाय च, सेनाप्रमुखत्वेन समराङ्गणमवतीर्णा।

दुर्गेश्वरः – विदितमेवैतत्।

राजा – प्रजानां प्रियं कर्तुमक्षमो निजजायां युद्धान्निवारयितुमशक्नुवन् मगधराजः सुधांशुर्निजराज्यत्यागं कृतवान्। सर्वस्वत्यागेनासावहिंसाव्रतरक्षणे दक्षोऽभवत्।

दुर्गेश्वरः – आश्चर्यम्।

अहो राज्यत्यागं मगधपतिरेवं विहितवान्
अहिंसापूर्त्यर्थे परिहृतमनेनेह सकलम् ।

राजा – नैतावदेव । निजभार्याप्रेम्णा कलत्रसंबन्धिकर्तव्यचिन्तया हिंसापरिहारलालसः स किं कृतवानिति ज्ञातं किंचन भवता ।

दुर्गेश्वरः – न हि न हि ।

स्वभार्याप्रेम्णाऽसौ नरपतिविशेषश्चरितवान्
यदन्यत्तच्छ्रोतुं हृदयमिदमौत्सुक्यनिचितम् ॥ ६ ॥

किं स महात्मा समाचरितवान् ।

राजा – स मन्दाकिनीमुपसृत्याभिहितवान् । 'देवि, मत्कृत्येन कुपितो वङ्गेश्वरो मगधानभिधावति । भवती चाहिंसाव्रतान्मगधसंरक्षणं श्रेयो मन्यते । कांचन हिंसाऽपरिहार्येत्यङ्गीकरोति ।—

दुर्गेश्वरः – ततस्ततः ।

राजा – अतो राज्यत्यागेन प्राकृतप्रजास्वेक इवाहं मगधराज्ञीं प्रार्थये । राष्ट्रस्यार्थे ग्रामं कुलं वापि त्यक्तुं शास्त्राज्ञा । तन्मे वधमादिश्य वङ्गेश्वरशान्तिं मगधरक्षणं बहुलहिंसान्तरपरिहारं च साधयेति ।

दुर्गेश्वरः – अहो, अद्भुतमहानुभावत्वं राजर्षेः । ततस्ततः ।

राजा – तदवलोकयितुमसहमानः, सुधांशुं मन्दाकिनीं च कृतनिश्चयात्परावर्तयितुमक्षमश्चाहं भवत्सकाशमेकाकी संप्राप्तः ।

दुर्गेश्वरः – वदतु शीघ्रं भवान् किमहं करवाणीति ।

नेदं सह्यं यद् विना सन्निमित्तं
नाशं यायाज्जीवनं चारुशीलम् ।
मार्गं राजन् कंचिदप्यादिशेर्मे
रत्नं यत्नैर्दुर्लभं नित्यरक्ष्यम् ॥ ७ ॥

राजा – अलं वैक्लव्येन । अनेनैव हेतुनाहमत्रोपेतः । भवान् न संबन्धित्वेनाभिमत इति वदता मगधराजेन भवानवमत इति सत्यं विदितमेव मे । तथापि मम कन्या

मन्दाकिनी मा दुःखमाग्भवत्विति मे मनीषितम् । न चाहं मगधराजं तस्याहिंसा-मताद्विचालयितुमुत्सहे । नापि च मगधनाशं प्रजाघातं वा वाञ्छामि ।

**दुर्गेश्वरः**—अतः किं क्रियते राजन् ।

**राजा**—अतो भवच्चरणाभ्याशमर्थित्वेनोपयामि ।

**दुर्गेश्वरः**—किं कृत्वा भवदमीप्सिते सहायो भवेयम् ।

**राजा**—देवीं हिमानीं शिबिरे स्थापयित्वाऽहमागतः । न सा जानाति ममात्रागमनं, तत्र प्रयोजनं वा ।

**दुर्गेश्वरः**—किमेतद्रहस्यम् ।

**राजा**—भवान् स्वावमाननिष्कृतिमीहते । मगधराजपराजयादपि न सा लभ्येत । यतो यावत् स संबन्धित्वेन भवन्तं न स्वीकरोति तावज्जयपराजयाभ्यां हिंसाऽहिंस-योरधरोत्तरत्वं न सिध्येत् ।

**दुर्गेश्वरः**—सत्यमाह भवान् ।

**राजा**—अत एवेयमभ्यर्थना ।

**दुर्गेश्वरः**—का नाम ।

**राजा**—अहं भवन्तं जामातृसंबन्धेनानुरूपं मन्ये । नात्र सन्देहः कार्यः ।

**दुर्गेश्वरः**—अनुगृहीतोऽस्मि ।

**राजा**—नापि च भवान् मन्दाकिन्या सार्धं युद्धं कृत्वा जयेन वापजयेन वा संमानं लभेत ।

**दुर्गेश्वरः**—एषैव ममापत्तिः ।

**राजा**—अतोऽहं कालिन्दीं भवते समर्पयामि । अथ च भवदवमाननिष्कृत्यै मेऽयोध्या-राज्यमपि भवत्पादयोरर्घ्यत्वेनार्पयितुं सज्जोऽस्मि ।

**दुर्गेश्वरः**—न हि न हि । न ह्येवं संभवेत् ।

**राजा**—भवता च मगधयात्रा समापयितव्या ।

**दुर्गेश्वरः**—कथं बद्धचरः, कथ्यमेतच्च मन्येयम् ।

**राजा**—युद्धपरिहारेण सर्वेऽपि सुखिनः सन्तु ।

**दुर्गेश्वरः**—कथं च मगधेश्वरो मन्येत ।

**द्वारपालः**—(प्रविश्य) देव, मगधेश्वरः स्वयमेव द्वारि समुपस्थितः सेनापतिना निगृहीतो भवद्दर्शनं याचते ।

दुर्गेश्वरः – कथं मगधेश्वरः ।

राजा – सुधांशुरत्रागतः ?

द्वारपालः – एवमेव देव ।

दुर्गेश्वरः – प्रवेशयैनं सबहुमानं बन्धहीनम् ।

द्वारपालः – यथाज्ञापयति देवः । ( निष्क्रान्तः । )

सुधांशुः – ( प्रविश्य ) अत्रागतोऽहं भवत्सेनापतिना निगृहीतः । भवद्दर्शनार्थमेवागतोऽहं वङ्गराज । ( राजानं प्रति ) राजन् अभिवादये ।

दुर्गेश्वरः – अपि कुशलं भवतो मगधराज ।

सुधांशुः – परचक्राभिक्रान्तो राजा कथं कुशली भवेत् । तथा च नाहं राजा । राजपदं परित्यक्तं मया वङ्गनाथ ।

दुर्गेश्वरः – कथमिव ।

सुधांशुः – आसीन्मे विश्वासो यन्मयि शासति मगधानहिंसाव्रतेन, न कोऽपि नृपतिर्मगधानभियास्यति । यतो न मगधाः पराभिघातलालसाः । न तु मया सम्यग्ज्ञातं यन्ममैवाचरणेन मगधाः संकटग्रस्ताः स्युः ।

राजा – कथं भवदाचरणेन ।

सुधांशुः – मयोक्तं हिंसां स्वीकुर्वन् राजा दुर्गेश्वरो न संबन्धित्वेनानुरूपोऽभिमतो वेति । तत एवेदं मगधानां रिपुभयं समुत्पन्नम् ।

राजा – अस्तीदं सत्यमेव ।

सुधांशुः – तथापि प्रजापालकेन राज्ञा स्वमतं दुरभिमानेन नानुष्ठेयं नोचार्यं वा । एतत्तु मयाधुनैनोपलक्षितम् । मम वचनान्मगधदुरितं संजातं वीक्ष्य, वङ्गराज, मया मगधराजपदं त्यक्तम् । अहिंसाव्रतं च पालयितुं निश्चितम् ।

दुर्गेश्वरः – नैवंविधा राजानो दृश्यन्ते ।

विरलाः पुरुषा भवादृशा जनतार्थे निजगौरवत्यजः ।
भवपालनदक्षतां कलौ न हि कश्चिद् वृणुते प्रशासकः ॥ ८ ॥

न पुनर्यापतेऽभ्यागमनहेतुः ।

सुधांशुः—शृणोतु भवान्। अहिंसाव्रतेन भवन्तं पाटलिपुत्रप्रवेशने निमन्त्रयितुं मे मनीषाऽऽसीत्। न तु तन्मम मन्त्रिमण्डलेन मगधराज्ञ्या वाऽऽदृतम्। तैः सर्वं मगधानां संरक्षणं बलादारब्धम्।

दुर्गेश्वरः—दृष्टमेतत्।

सुधांशुः—सर्वप्रजासु मे स्नेहः। न च ताभिरपराद्धम्। अपराधी त्वहमतो भवत्पुरतः समुपस्थितः। विज्ञापये च। न भवतो मगधाः क्रोधकारणम्। अतो न मगधप्रजाः पीडयितव्या भवद्बलं च वङ्गान् प्रति नेयम्। यच्छासनं मम कृते भवानाज्ञापयति तन्मया शिरसा धारणीयम्।

नाहं भीतो दण्डनाद् भूप कस्मात्
सर्वो ग्राह्यः कर्मणां मे विपाकः।
श्लाघ्यं नैवं निष्प्रमादस्थितीनां
पीडां कर्तुं मागधीनां प्रजानाम्॥ ९॥

दुर्गेश्वरः—श्रूयते देवी मन्दाकिनी मगधबलं समरे नयतीति।

सुधांशुः—यदा भवतः सेना वङ्गान् प्रतिगच्छति तदा न समरावसर एवावशिष्येत्।

दुर्गेश्वरः—यद्यपि भवानस्माभिर्बन्धनागारे क्षिप्तस्तथापि न खलु मगधसेना युद्धं न करिष्यति।

सुधांशुः—नाहमधुना मगधराजः। देवी मन्दाकिनी न मे शासनं मन्यते। न वाऽहिंसाव्रते स्थिरा सा। तथापि मगधाभिरक्षणमेव तस्या मनोगतम्। यदि परचक्रभयं निरस्तं तन्मन्ये न युद्धं प्रसज्येतेति।

दुर्गेश्वरः—यदि न भवान् मगधराजस्तत्कथं भवद्वचने विश्वसितव्यं मगधा न युध्येरन्निति।

सुधांशुः—वङ्गराज, मगधान् युद्धात्परावर्तयितुं शक्नुयामिति मे विश्वासः। यच्छासनं मम कृते भवता संकल्पितं तद् यदि युद्धविरामानन्तरं भवान् विदध्यात् तर्हि मगधसेनासंमुखं मम देहं स्थापयामि। मन्ये न मगधशरा मम वपुषि प्रवर्तेरन्निति। न वा देवी मन्दाकिनी—

द्वारपालः—(प्रविश्य)—मगधराज्ञी समुपस्थिता प्रतीहारभूमौ।

दुर्गेश्वरः—शीघ्रं प्रविशतु।

**द्वारपालः**—यथाज्ञापयति देवः ।

( निष्क्रान्तः । मन्दाकिनी प्रविशति । )

**दुर्गेश्वरः**—स्वागतं मगधराज्ञ्यै ।

**मन्दाकिनी**—नाथ, भवान् किमत्र कुरुते ।

**सुधांशुः**—मगधसंरक्षणमहिंसानुष्ठानं च ।

**दुर्गेश्वरः**—किमागमनप्रयोजनं देवि शत्रुशिबिरे ।

**मन्दाकिनी**—वङ्गाधिपो न मे शत्रुः । तात, कथं भवानत्र तिष्ठति ।

**राजा**—मया प्रथमो जामाता रक्षणीयो द्वितीयश्चार्जनीयः । द्वयो राष्ट्रयोः कलह उपशमनीयः । कन्या साहसात्परावर्तनीया । अन्यस्याश्च विवाहः संपादयितव्यः । हिंसाऽहिंसाविवादश्च शान्तिं नेयः । इतीयं मे कर्तव्यपरंपरा ।

**मन्दाकिनी**—तदेव च सर्वमेकपदे विधातुं ममोपक्रमः । तथा च मया मगधानां राजा पुनरर्जनीयः ।

**राजा**—साधु । वत्से, साधु ।

**मन्दाकिनी**—वङ्गराज,

भवदभीप्सितमत्र 'सुधांशुना<br>
वचनमुक्तमतोऽस्य विनिष्कृतिः' ।<br>
मगधराज्यमनाग इति क्वचिन्<br>
न समराय भवेद् भवतः स्पृहा ॥ १० ॥

अतो मगधराजराज्यत्यागानन्तरमपि, अस्ति युद्धे भवदासक्तिः ?

**दुर्गेश्वरः**—न कदापि युद्धेऽभूदासक्तिर्वङ्गराजस्य । देवि, यैः स्वव्रतत्वेनाहिंसाऽऽदृता तैरेव मन्यतेऽन्ये सर्वे हिंसावादिन इति । नैतत्सत्यम् । स्वाभिमानसंरक्षणं न हिंसात्वेन गण्यते मया ।

प्रतिनिधिर्ननु वङ्गनिवासिना-<br>
मवमतो मगधैः किमु सह्यते ।<br>
न हि मया समरस्त्वभिनन्दितो<br>
न च तथा स कदापि तिरस्कृतः ॥ ११ ॥

अतो न मेऽकारणसमराय स्पृहा ।

मन्दाकिनी—तर्हि सन्धिप्रस्थापनं सुकरं मन्ये। कथं नु मन्येत भवान् स्वाभिमानं सुरक्षितं कथं च सन्धिः साधितः स्यात्।

दुर्गेश्वरः—ननु सर्वसमर्था भवती मगधप्रतिनिधित्वे?

मन्दाकिनी—अथ किम्। मगधराजेन स्वेच्छया राजपदं दूरीकृतम्। मगधहितं तथैव साधयामीत्यस्य भावः। अहमेव मगधशासित्रेदानीम्। राज्ञीपदादेव मगधसंकटं निवारयामीति मे निश्चयः।

दुर्गेश्वरः—तत्किं मन्यते भवती।

मन्दाकिनी—वङ्गराज,

सेना प्रयातु भवतो निजवङ्गदेशं
युद्धं च यातु विलयं जनहानिहेतु।

दुर्गेश्वरः—कथमेतत् संभवति।

मन्दाकिनी—

नोचेद् रणाय मगधा अभियान्तु वङ्गे-
र्यद् भावि तद् भवतु भो नियतीच्छयैव॥ १२॥

यद्रोचते तद् वृणोतु भवान्।

दुर्गेश्वरः—मगधराजः सुधांशुरप्यत्रोपस्थितः। स किमपि मच्छासनं स्वीकर्तुं बद्धपरिकरः। तथैव भवत्पिताऽयोध्यापतिः सर्वसंकटात् तारयितुं कृतनिश्चयोऽत्र वर्तते। किमन्यद् वाञ्छितं स्यान्मे।

मन्दाकिनी—तत्किं कर्तुं समीहते भवान्।

दुर्गेश्वरः—प्रतियातु भवती पाटलिपुत्रम्। युद्धविरामं चोद्घोषयतु। मम सेना वङ्गान् प्रतियास्यति।

मन्दाकिनी—कथं तु भवद्वयमाननिष्कृतिः।

दुर्गेश्वरः—मगधराजः सुधांशुरयोध्यापतिश्च राजा चण्डप्रतापो मया सह वङ्गान् गमिष्यतः। तत्र यच्छासनं समीचीनं मन्यामहे तद्वितरिष्यामः।

मन्दाकिनी—ज्ञातमेव भवता यन्मगधराजः स्वनिधनेऽपि सिद्धः। न पुनर्मगधप्रजास्तं दूरीकर्तुमनुमन्येरन्। मगधसिंहासनं तस्य कृतेऽद्यापि शून्यं तिष्ठति। यदि

भवानङ्गुलिमात्रमपि मगधराजं व्यपनयेत्तन्मगधसेना बुभुक्षितव्याघ्रीवद् वङ्गबलं व्यापादयिष्यति। भवान् मगधभूमौ वसतीदानीम्। न वङ्गभूमौ। न मगधेभ्यो निर्गन्तुं भवद्बलमलं स्यात्। अतः–

> प्रतिचलतु वः सेना वङ्गान् विना मगधेश्वरं
> जनपदपथे लप्स्यन्तेऽर्थास्तया मगधावनेः।
> यदि तु भवता सार्धं राजा बलात्किल नीयते
> निखिलपृतना वङ्गानां सा क्षणान्न भविष्यति॥ १३॥

**दुर्गेश्वरः**–तर्हि युद्धमवश्यं भावि।

**मन्दाकिनी**–तथा च यदि मे पिता भवद्बन्धस्य इतः प्रयाति तदयं मे खड्गस्तावन्न शान्तिमियाद् यावन्न स मोचितः।

**दुर्गेश्वरः**–तत्कथं भवती मन्यते युद्धविरामसंभवम्।

**मन्दाकिनी**–यदि भवान् मगधराजं मुञ्चेत् तथा चायोध्यापतिं न बन्धे क्षिपेद् यदि च भवत्सेना वङ्गान् प्रतिनिवर्तेत तर्हि–

**दुर्गेश्वरः**–(सोत्कण्ठं) किं तर्हि—

**मन्दाकिनी**–तर्हि मगधराज्ञी सुधांशुपत्नीयमयोध्यापतिदुहिता भवद्बन्धे स्थातुमनु मन्येत। मम पितुः कृते, मम पत्युः कृते, मम राष्ट्रस्य कृते च मम जीवितं भवद्धस्ते न्यासीक्रियेत। यदा च कालिन्दी भवत्पत्नी भवेद् भवांश्च मगधराज-संबन्धी स्यात्तदैव मगधान् प्रतियास्यामि भर्तारं पितरं च द्रक्ष्यामि।

**सुधांशुः**–(उत्थाय) नैतत्संभवति।

**राजा**–न श्रुतपूर्वमेतत्। न च संभवनीयमपि।

**दुर्गेश्वरः**–तत्किं कुर्यान्मगधराजः। मह्यं रोचते निवेदनमिदं देव्याः। तद् ब्रवीतु मगधराज, एवं कृते किं संभवेत्।

**सुधांशुः**–कुलप्रतिष्ठारक्षणार्थमग्निसमक्षपरिणीतायाः स्वामिन्या दुरितनिवारणार्थमेकमेव संभवेत्। वङ्गराज, नैतदनुष्ठेयम्। अहं वङ्गान् नेयः।

**राजा**–अहमत्र तिष्ठामि। वङ्गराजशासनं परिपालयितुं समुत्कण्ठितोऽहम्। माऽन्य-चिन्तयतु भवान् वङ्गराज।

**दुर्गेश्वरः**—यदि मच्छासनमनुमतमनुष्ठेयं च भवता तदा देवीयं मया सार्धं बन्दित्वेन वङ्गान् गच्छतु। मगधराजश्च पुनर्मगधसिंहासनमलंकरोतु। भविष्यति पुनर्मेलनमेतयोः कालिन्दीविवाहमङ्गलसमये।

**सुधांशुः**—वङ्गराज, भवान्निजायमाननिष्कृतिं मार्गयति। सोऽवमानो मया कृतः। यच्छासनं भवानत आज्ञापयति तदङ्गीकर्तुं बद्धपरिकरोऽहमत्र। किमन्यदन्विष्यते।

**राजा**—अहमपि सर्वसंशयविच्छेदनाय भवच्छासने स्थितः। तत्सर्वथा मा मन्दाकिनीं बन्धे निक्षिपतु भवान्।

**दुर्गेश्वरः**—मगधराजो भवांस्तथा देव्यपि मच्छासने स्थातुं स्पृहयन्ति। अतो यामाज्ञामहं वितरामि तामनुष्ठातुं सुलभमेव।

**राजा**—आज्ञापयतु भवान्।

**दुर्गेश्वरः**—यन्मया भाषितपूर्वं तदेव पुनरुच्चारयामि। मगधराजो मगधसिंहासनमलंकरोतु निजाहिंसाव्रतं च पालयतु। अयोध्यापतिश्च स्वराज्यं प्रतिनिवृत्य कालिन्दीविवाहमङ्गलार्थं प्रयतताम्। देवी मन्दाकिनी मया सार्धं बन्धस्था वङ्गान् यास्यति। भगिनीविवाहमङ्गलसमये च प्रतिनिवर्तिष्यते।

**मन्दाकिनी**—गृहीतं वचः। नाथ, मगधराजधानीं प्रविश्य सिंहासनमलंकरोतु राजदण्डं च धारयतु भवान्। तात, अभिवादये। कालिन्दीविवाहसज्जतां विदधातु भवान्। नाथ आमन्त्रये। सुखिन्यहमधुना।

> क्षणोऽयं मद्भाग्यादुदित इह यन्नाथचरणे
> पुनः स्थाप्येते ते मगधपतिसिंहासनतले।
> तथाऽयोध्यानाथः परिभवपदान्मोचनमितो
> न वा युद्धं कार्यं परिणयसुखं मे स्वसुरपि॥ १४॥

**सुधांशुः**—पूर्वमेव गदितं मया नैतत्संभवेदिति।

> कुतो राजा जायां रिपुबलहृतां क्षत्रकुलजः
> सहेत प्रज्ञावानपरिहततेजाः परिभवम्।
> अहिंसा हिंसा वा नृपतिचरितं दूषणयुतं
> न शक्या राज्ञि स्याद् भुवनदुरितं शंसितुमिह॥ १५॥

**दुर्गेश्वरः**—श्रुतमस्माभिरेतत् । न पुनर्ज्ञायते किं करिष्यति मगधराजः ।

**सुधांशुः**—किं करिष्यामि । शृणोतु भवान्—

> शस्त्रं वृणोमि, मम राजकुलप्रतिष्ठां
> रक्षामि तूर्णमपहाय कुलप्रतिज्ञाम् ।
> जानामि शाश्वतमहत्तरतां कुलस्य
> स्यात् खण्डितव्रतचितिः पुनरेव लोके ॥ १६ ॥

**दुर्गेश्वरः**—न तर्हि व्रतं पालयेन्मगधाधिपोऽहिंसापरम् । अस्माकमप्येतदभिप्रेतम् । नेतः किंचित्कार्यमन्यत् । देवी मन्दाकिन्यपि मा मया सार्धमागच्छतु । अयोध्याधिप, स्वैरं विहर्तुं प्रभुर्भवान् ।

**राजा**—तद्वयं धन्याः । किमर्थं तर्हि वङ्गगमनं भवतोऽधुना । अयोध्यां गत्वा विवाहं संपाद्यैव वङ्गाः प्राप्तव्याः ।

**दुर्गेश्वरः**—राजन् प्रथममेव मया संकल्पितं यावन्न मगधेश्वरो विवाहमनुमन्यते न तावद्विवाहमङ्गीकुर्याम् ।

**हिमानी**—( प्रविश्य ) हता वयं नाथ । प्रनष्टा कालिन्दी ।

**सर्वे**—कथमिव ।

**हिमानी**—तस्या अत्र आनयनार्थं प्रेषिता भवता दूताः सैनिकाश्च । मार्गे तु श्रुतं तया तस्याः कृते मगधराजस्य राज्यत्यागो मन्दाकिन्याश्च समरप्लवनमिति । मा मत्कृतेऽयं व्यतिकरो भवेदिति प्रयागतीर्थे तया गङ्गाप्रवाहे देहः क्षिप्तः ।

**सर्वे**—हा धिक् । हा धिक् ।

**दुर्गेश्वरः**—किमिदं दारुणं समापतितम् । हतदुर्दैव वञ्चिता वयं भवता ।

**राजा**—कालिन्दी मन्दाकिनीप्रवाहे निमग्ना । हा कालिन्दि ।

**मन्दाकिनी**—सर्वपरिश्रमा व्यर्थत्वं गताः ।

**हिमानी**—हा पुत्रि । ( मूर्च्छति । ) ( अन्ये तां परिचरन्ति । )

॥ इति द्वितीयोऽङ्कः ॥

## ३

[ वज्रराजधान्यां निजप्रासादे विमनायमानो दुर्गेश्वर इतस्ततः संचरति । ]

दुर्गेश्वरः—(आत्मगतम्) कालिन्दि, त्वत्कृते सर्वोऽयं समुद्यमः समारब्ध आसीत्। कथं स व्यर्थीभूतः। कुत्र ते जीवनम्। कुतो वा पुनर्दर्शनम्।

दैवेन दुर्विलसितेन हि विप्रलब्धाः
सत्यं वयं; न सरला हतदैवनीतिः ।
कस्मान्मया तु भवती परिवीक्षिताऽपि
श्रेयोऽभविष्यदथ मे जलमज्जनेन ॥ १ ॥

अथवा,

साफल्यं नयने गते नु भवतीं कामं निपीय प्रिये
न स्पर्शस्तु विमोहवानधिगतो मद्बाहुपाशेन ते ।
निःश्वासो न तवाधरे निपतितो मे सौख्यमन्दानिलो
न स्कन्धोऽपि तथा कृतः पुलकितो मूर्धोपधानादसौ ॥ २ ॥

मर्मप्रेममूर्तीनां कुतः शान्तिः। प्रिये, त्वयापि कथमेवं विहितम्।

कथमेकपदे जलाशये
मृदुदेहो निहितस्त्वया प्रिये।
अपि गाङ्गजलं हि निर्घृणं
निदधे रोधसि तं न यत्पुनः ॥ ३ ॥

न मे राज्यस्य स्पृहा। न जीवितस्य वापि। किमयं युद्धस्य दारुणः परिपाकः।

( ततः प्रविशति पुष्पहस्तः कैलासदासः। दुर्गेश्वरं प्रणम्य तस्मै पुष्पं समर्पयति। )

यथेदं सुकुमारं कुसुमं तथैव नरजीवनम्। क्षणमात्रमाशासुरङ्गान् प्रदर्श्य म्लायति।

**कैलासदासः**—महाराज, सत्यमाह भवान्।

न रूपं कुसुमानां वा नराणां वा चिरं भवेत्।
ज्ञानसंन्यासपादाभ्यां नित्यात्मानं व्रजेन्नरः ॥ ४ ॥

**दुर्गेश्वरः**—कथं त्वत्रागतो भवान्।

**कैलासदासः**—प्रेषितोऽहं देव्या हिमान्या मवद्विमर्शाय।

**दुर्गेश्वरः**—को विमर्शो नः। हिमानीदेव्या निजकन्याविलोपः सह्यते धीरभावेन।

**कैलासदासः**—दुःखविलयनेऽस्त्यभ्युपायो महाराज।

**दुर्गेश्वरः**—को नाम।

**कैलासदासः**—सर्वं दुःखं संसारिजनस्य भवति। नैव दुःखं संन्यासिनः।

**दुर्गेश्वरः**—अप्यस्ति सुखं संन्यासिनः।

**कैलासदासः**—यत्र यत्र दुःखाभावस्तत्र तत्र सौख्यमेव।

न दुःखं न सौख्यं न भीतिर्न शङ्का
न हर्षश्च भव्यो न वासा अमर्षः।
स्थिरं शाश्वतं केवलं ब्रह्म शान्तं
चिरं देव संन्यासिनो नित्यमुक्तम् ॥ ५ ॥

**दुर्गेश्वरः**—अहमपि मन्ये न संन्यासिनो दुःखं नापि च सुखम्। को लाभोऽस्मिञ्जीवने। अतो यस्य सुखमिष्टं तेन दुःखं सोढव्यमेव।

**कैलासदास**.—संन्यासाद् मगवता गीता माह्मी स्थितिः प्राप्यते।

दुर्गेश्वरः—कथं पुनर्नरपतिना संन्यासिना भवितव्यम्। को राज्यशासनं कुर्यात्।

(कालीप्रसादः प्रविशति। दुर्गेश्वरं प्रणम्य तस्मै पक्वाम्रफलं प्रयच्छति।)

कालीप्रसादः—प्रेषितोऽहं भवत्सकाशमयोध्यापतिना कुशलं प्रष्टुम्। आम्रफलं च तेनोपायनीकृतं भवदर्थे। उक्तमपि यथेदं स्वादुरसेन परिणम्य संतोषदायि भवति तथैव दुःखाम्लतां विमुच्य भवता राज्यकार्यं जनसंतोषाय विधेयमिति।

दुर्गेश्वरः—आचार्यः कैलासदासो मां संन्यासिवेषे द्रष्टुमुत्कण्ठितः। तत्रैव दुःखसमाप्तिरिति तेनोपदिष्टम्।

कालीप्रसादः—कथं राज्ञः संन्यासः। प्रजापालनं तस्यापरिहार्यमेव। यदि केवलं दुःखनाशोऽभिप्रेतस्तर्हि श्रुतिप्रणीतो विधिमार्गः समाचरणीयः।

दुर्गेश्वरः—कथमिव।

कालीप्रसादः—प्रभूतं यज्ञयागादि कर्मजातं श्रुतिविहितं कारणवशात्। इष्टापूर्तादि विधेयं महाराजेन।

इच्छापूर्तैर्देव यज्ञस्य वेदिः
स्थानं गीतं साङ्गवेदैश्चिराय।
अग्नौ सर्वं हूयते तत्र दुःखं
सौख्यं तस्माज्जायते यज्ञभाजः॥ ६॥

कैलासदासः—मा मैवं विपथं नयतु भवान् वङ्गराजम्।

नैवं कामः शाम्यते कामभोगै-
राज्यासारैर्वर्धते वह्निरेभिः।
कामान्हित्वा ब्रह्म विन्देत योगी
जन्मव्याधिं कामकामी लभेत॥ ७॥

कालीप्रसादः—रे कैलासदास, कथं संन्यासं राज्ञः प्रशंससि। केन कार्यं प्रजापालनम्। देवर्षिपितृणामानृण्यं च कुतः संन्यासेन।

कैलासदासः—संन्यासिन आनृण्यमेव।

अनृणी ननु संन्यस्तो देयादेयैर्न बाध्यते।
यो न वाञ्छति न द्वेष्टि नैव तस्य भवेदृणम्॥ ८॥

**कालीप्रसादः**—रे संन्यासप्रिय, यदि तव पिता बालसंन्यासयासीत्, तर्हि कुतस्ते जन्म कुतो वा संन्यासप्रवचनम् । एतावानेव संन्यासिनः प्रभावः । यदि संन्यास एव सत्यं तर्हि व्यर्थं तव जननम् ।

**दुर्गेश्वरः**—मैवं विवादः । कर्माणि संन्यासं च यथाक्रमं यथाकालं चरित्वा मुच्यते नरः ।

**कैलासदासः**—कर्माणि चरित्वा बध्यत एव सः । न कर्मणां मुक्तिः ।

( राजा चण्डप्रतापो देवी हिमानी च प्रविशतः । )

**राजा**—स्वस्ति वङ्गराजाय ।

**दुर्गेश्वरः**—राजन्, अभिवादये । देवि, अभिवादये । अलंक्रियेतामासने ।

**हिमानी**—आचार्य कैलासदास, प्रेषितो भवान्मया वङ्गराजविमर्शाय । न च प्रतिनिवृत्य निवेदितं किंचिद् भवता ।

**राजा**—मया च प्रेषितः कालीप्रसादः । ननु वङ्गराजमनोविनोदनं कुरुतः ।

**दुर्गेश्वरः**—कैलासदासाभिप्रायो मे संन्यासग्रहणं समुचितमिति ।

**हिमानी**—कथं भवतः संन्यासग्रहणम् ।

**दुर्गेश्वरः**—कालीप्रसादो मया यज्ञं कारयेत् ।

**राजा**—कालीप्रसाद, कैलासदास, उभावपि मूढौ । कस्य किं वक्तव्यमित्यपि न जानीतो भवन्तौ । तारतम्यज्ञानं विना न पाण्डित्यप्रयोगः शोभनः । उक्तमासीन्मया वङ्गराजजन्मपत्रिकामधीत्य किंचित्कथयतामिति । किं संभूतमत्र ।

**हिमानी**—कालिन्दीजन्मपत्रिकामपि परीक्षितवन्तौ । को लाभः । नेतौ शास्त्रनिपुणौ ।

**कालीप्रसादः**—मया तु कथितमेव नैष विवाहः संपद्येत ।

**कैलासदासः**—मया लब्धा पत्रिकैवालीका । गृहस्वामी बुधस्तत्र कुम्भे पतितः ।

**दुर्गेश्वरः**—किमुक्तमासीद् भवता कालिन्दीग्रहपरीक्षणात् ।

**राजा**—स कथितवान् विवाहः शिशिरर्तावस्मिन् भव्य इति ।

**दुर्गेश्वरः**—शिशिरर्तुस्तु आरब्ध एव ।

**राजा**—प्रारब्धगतिश्चिन्तनीया । गच्छतां भवन्तौ निजकार्याय ।

( आचार्यौ निष्क्रान्तौ । )

**हिमानी**—अपि कुशली वङ्गराजः ।

दुर्गेश्वर – यथाशक्ति कुशलस्थ एव।

राजा – किंचिन्मनोविनोदन पर्यनुष्ठेयम्। मृगयाविहारो मन समादध्यात्।

दुर्गेश्वर – न हि न हि राजन्। नात पर हिंसाप्रकारक मनोविनोदन मे रोचेत।

राजा – कथमिव।

दुर्गेश्वर – केवल ममावमाननिष्कृतिपर आचारो राष्ट्रद्वययुद्धेन परिणत। तथा च मगधराजस्य राज्यत्याग आपतित। अन्ते च कालिन्दीविलयनम्। न पुनर्हिंसा माचरामि। शान्त मनोऽहिंसामार्गे स्थापयिष्यामि। न युद्धाश्रयो मयेदानीं कर्तव्य।

अल हिंसाविहारेण न युद्धाय मम स्पृहा<br>
सर्वनाशे परिणतिर्हिंसामाचरतो यत ॥ ९ ॥

राजा – विना युद्ध राष्ट्ररक्षण न सुलभ स्यात्।

दुर्गेश्वर न युद्धमपि ननु सुकरम्। तथा च भवानयोध्यापतिस्तथा च मगधराजो मित्रत्वेन वर्तमाना। कुतोऽत्र युद्धावसर। अन्य कश्चन नृपस्त्रिराजैकमत्यादेव न युद्धाय प्रवर्तेत। न राजन्, मम हिंसाचरणमधुना। शमयुक्तविवादेन सर्वा पृथ्वीपतिसमस्या निरस्या।

(सुधांशु प्रविशति।)

राजा – स्वागत भवतो मगधराज।

दुर्गेश्वर – क्व भवत शस्त्रम्। (तेन परिहित धनु खड्गादि निजाङ्गुल्या दर्शयति।)

राजा – ननु महदाश्चर्यमिदम्।

हिमानी – ननु शूरवीरो युद्धचतुरो मगधराज।

राजा तथापि शस्त्र परित्यक्तमासीदहिंसाव्रतेन तेन।

सुधांशु – शान्त शान्तम्। न मयाऽहिंसाव्रत परित्यक्तम्।

दुर्गेश्वर – कथमयं वेष।

सुधांशु – न मयाऽहिंसाव्रतस्याभिप्राय सम्यग्ज्ञातपूर्व।

राजा – कोऽन्य नवाभिप्राय।

सुधांशु – स देव्या मन्दाकिन्या प्रदर्शित।

हिमानी – चतुरैव मम कन्या।

**दुर्गेश्वर** – क एषोऽभिप्राय । मया त्वहिंसाव्रत स्वीकृतमिदानीमेव ।

**सुधांशु** – साधु । साधु । तथापि न मत्कृत प्रमादमाचरतु भवान् ।

**दुर्गेश्वर** – कोऽयं प्रमाद । कथं वा खड्गधनुर्धारिणोऽहिंसा ।

**सुधांशु** – मया यत्पूर्वमहिंसाव्रत स्वीकृत का तस्या परिणति । वङ्गराजेन निजाश्रमानो मत इति प्रथमा । मम प्रजारक्षणविमुखत्वेन सङ्कटकाले राज्यत्याग प्रजापालन-त्यागश्चेति द्वितीया परिणति ।

**राजा** – एवमेव निष्पन्नम् ।

**सुधांशु** – ततो मम पत्नी रणसमुखी जाता । निजस्थान परिहाय केवल प्रजाहिताय तया पीडा स्वीकृता । पतित्यागोऽपि समाप्ती न तया परिगणित । एव यस्या रक्षण मया कर्तव्य सा मगधदेवता विपदि परिहीना मयेति तृतीया परिणति ।

**हिमानी** – बहुव्यथा सोढा मम दुहित्रा ।

**सुधांशु** – अतोऽपि बलवत्तरमन्यत् सजातम् । एत व्यतिकरमसहमानया कालिन्दीदेव्या गङ्गाया मज्जन स्वीकृतम् । यद्येषाऽहिंसाव्रतस्य परिणति, यदि हिंसायामेवाहिंसा परिणमेत्, तत्कथ साऽहिंसा कथ वा तस्या व्रतत्वेन स्वीकार ।

हिंसाफलमहिंसायाः सभवेन्न कदाचन ।
यत्रैव भासते नैषा सत्याहिंसा मत मया ॥ १० ॥

**राजा** – साधूक्तम् ।

**सुधांशु** – अतो ज्ञात मया हिंसाघातिनी भव्याहिंसा न हिंसापरिणामवती । अतो बलवतोऽहिंसा मया स्वीकृता । न दुर्बलस्यात परम् । हिंसाविघाताय यत्क्रियते ऽहिंसाव्रतस्थेन, न तेन व्रतहानिरिति विदितमधुना । न हिंसेच्छया हिंसा कार्या । एतदेवाऽहिंसाव्रतम् ।

**दुर्गेश्वर** – एतदहिंसाव्रतमेव धारयामि । मृगयाऽपि वर्जिताऽत एव ।

**सुधांशु** अधुना वङ्गराज, भवत क्षमा याचे । मन्ये भवानेव कालिन्दीसमनुगुण पतिरभविष्यत् । तत्तु ज्ञातमतिविलम्बात् । कुतोऽधुना देवी कालिन्दी । अत एव मा क्षन्तुमर्हति वङ्गराज ।

**दुर्गेश्वरः** – न क्षमायाचनमेव युक्त मगधराज ।

**सुधांशुः**–भवत्स्वपराद्धं मया राजन्नयोध्यापते। भवद्दुहितृनाशायाहमेव निमित्तकारणम्। यत्प्रायश्चित्तं भवानाज्ञापयति तद्विधातुं सिद्ध एष देहः।

**राजा**–गतं न शोच्यम्। यद्येतावता सर्वदुरितं निरस्तं तर्हि साधु मन्तव्यम्।

**दुर्गेश्वरः**–सर्वमितरत् संपद्येत। कुतः पुनः कालिन्दीजीवनम्।

(मन्दाकिनी प्रविशति। तां पुरोहितद्वयमनुसरति।)

**मन्दाकिनी**–(कैलासदासं प्रति) तदपि संभवेत्।

**दुर्गेश्वरः**–किं संभवेत्। पुनर्जीवनम्?

**मन्दाकिनी**–अयमाचार्यः पृच्छति। नाधुना कालिन्दीदेवी। तस्या जन्मपत्रिका तु तस्या विवाहमस्मिन् दर्शयति शिशिरर्तौ। कथमेतत्संभवेदिति।

**दुर्गेश्वरः**–तत्कथं भवती वदति तदपि संभवेदिति।

**मन्दाकिनी**–यदि जन्मपत्रिकैवं शास्त्रपूतं दर्शयति तत्र किं वयं कुर्याम। न तत्र यदि कालिन्दीविलोपः प्रदर्शितस्तदपि किं कर्तुं शक्यम्।

**कैलासदासः**–(जन्मपत्रिकां प्रदर्श्य) किंचिद्दुरितं दर्शितमत्र न तु तन्महदिति नावेदितपूर्वं मया।

**मन्दाकिनी**–किं चाऽऽवेदितेनापि। भवतु तत्। सर्वेषामहमपराधिनी क्षमां याचितुमत्रागता।

**दुर्गेश्वरः**–भवती नन्वपराधिनी?

**राजा**–नैवं वत्से। न त्वयापराद्धम्।

**हिमानी**–न मे कन्याऽपराधिनीति वर्णयितुं कोऽपि प्रभवेत्।

**सुधांशुः**–देवि, त्वयैव मन्नयनेऽञ्जनं प्रयुक्तम्। ममाहिंसाव्रतं नाधुनाऽन्धप्रकारकम्। भवतीं रणे प्रेष्याहं भवत्यां सुदूरमपराद्धः। तत्क्षन्तव्योऽहम्।

जनहितपरा मूर्तिर्दृष्टा यदा रणरागिणी
मनसि न च ते हिंसालेशो न चाऽऽचरणे तथा।
विदितमथ मे श्रेष्ठाऽहिंसारहस्यमतः प्रिये
चरणयुगलं याचे तस्मात्क्षमां मगधेश्वरि॥ ११॥

**मन्दाकिनी**—यदा तु वङ्गाधिपो मा नेतुं प्रवृत्तस्तदा भवता युद्धसज्जतां प्रदर्श्य स प्रतिषिद्धः। युद्धमपि च विश्रान्तम्। नातो भवानपराध्यति। तदैव च मे नाथसम्यग्दर्शनं जातम्।

यदा वलवृता विनिश्चितमता यशःसंभृता
स्थिता शिखरितायुता रुचिरमूर्तिरालोकिता।
तदा हृदि कृतार्थता हि भवदीयतेजोभरै-
र्धृता, नयनिता क्षणाद्, अवसरः क्षमार्थं कुतः॥ १२॥

**राजा**—साध्वमिहितं वत्से।

**मन्दाकिनी**—अम्ब, तव कन्या मम रणविशारदा। तत्कथं मां न निषिध्यसि।

**हिमानी**—यत्त्वया कृतं तन्मगधराज्ञीपदस्य समुचितमेव। न तत्र मे रोषः।

**मन्दाकिनी**—तात, नापि भवान् मे कुपितः।

**राजा**—कुपितोऽहं वत्से, न तु भवत्यै। यदि कश्चन क्रोधार्हो मे, तदहं स्वयमेव। मयाऽऽहूतस्य वङ्गराजस्यावमानो मत्प्रासाद एव समजायत। तत्कथं त्वां प्रमादिनीं मन्येय।

**मन्दाकिनी**—वङ्गराज, भवत्संमुखं रणे स्थित्वा साहसमनुष्ठितं मया। तत्क्षम्यतामियं ललनाया अमर्यादा।

**दुर्गेश्वरः**—राज्ञीपदस्य प्रतिष्ठेयम्। नामर्यादा।

**मन्दाकिनी**—ननु मन्ये कालिन्दीविश्लेषेण न कोऽपि भवता निषीदति मां चापराधिनीं गणयति। तन्मन्ये सर्वैरभिनन्दितमेतद् घटितम्।

**सर्वे**—शान्तं पापम्।

**मन्दाकिनी**—तत्कथं न कोऽपि तस्या विवाहं वङ्गराजेनापेक्षते।

**हिमानी**—कुतो विवाहोऽधुना।

**मन्दाकिनी**—तत्कथमेष पण्डितो वदति कैलासदासः शिशिरर्तौ कालिन्दीविवाह इति।

**कैलासदासः**—न केवलं राजकन्याया अपि तु वङ्गराजस्य हि।

**दुर्गेश्वरः**—गता देवी कालिन्दी। नातो मे विवाहः।

गता नेत्रानन्दा विगत इह मे जीवनरसो
धृतो मन्दाकिन्या रहसि वहतादू गूढनिलयम् ।
न लोकेऽस्मिन्यायात् प्रकटमथ सा दर्शनपथं
न वास्यार्तस्य स्यात् बलवदगदो विस्मृतिगुणः ॥ १३ ॥

**कालीप्रसादः** – मा मा वङ्गराज । भवद्विवाहो निश्चित एव ।

**दुर्गेश्वरः** – कथं कर्ममार्गिणः संन्यासिनश्चैकमत्यम् ।

**राजा** – तर्हि पौरोहित्यमुभयोरप्यभविष्यद् यदि विवाहः समपत्स्यत ।

**सुधांशुः** – हिंसाऽहिंसाविवेकोऽप्युभयोरावयोरधुना समानः । अतोऽपि वङ्गराजोऽस्म-त्संबन्धी भवितुमर्हति ।

**मन्दाकिनी** – यद्येवं तत्तथैव भवतु ।

**दुर्गेश्वरः** – किं कथं भवतु ।

**मन्दाकिनी** – तात, अम्ब, विवाहमङ्गलसज्जता विधीयताम् । अलं विषादेन । जीवति कालिन्दी ।

**सर्वे** – जीवति कालिन्दी ?

**दुर्गेश्वरः** – अलं परिहासेन । क्व वर्तते कालिन्दी । कथं पुनर्जीवितमापन्ना ।

दग्धोऽङ्कुरः पल्लवमाप्नुयाद्वा
जलं वहत्यूर्ध्वमिव क्वचिद्वा ।
ननु प्रिया जीवितधारिणी सा
दैवाहिता वा मम वङ्गनृपा ॥ १४ ॥

**मन्दाकिनी** – कालिन्दी मन्दाकिनीनदीप्रवाहे पतितेति भवद्भिः श्रुता वार्ताऽलीका । सा मगधराज्ञी मन्दाकिनीपरिवारे वेषान्तरेण रक्षिता । मयैवैतत्कारितम् । यदा तु युद्धं वङ्गराजेन सह मे प्रवृत्तं तदा स परिवारो मया ब्रह्मपुत्र्याः सरस्वत्या हस्ते समर्पितः । तया च स वङ्गान् प्रत्यानीतः ।

**दुर्गेश्वरः** – कुत्र वर्तते सा कालिन्दीदेवी ।

**मन्दाकिनी** – भवत्प्रासादसमीपमस्त्वच्छिबिर एव सुस्थिता । न पुनरपराधिनीं मां कोऽपि शासितुमीहते ।

**कालीप्रसादः** – कैलासदास, उभयोरपि पौरोहित्यमधुना ।

**कैलासदासः** – तथा च मम सुताविवाहोऽपि ननु ।

**दुर्गेश्वरः** – सर्वैस्तत्र गत्वा नेत्रसाफल्यमनुवर्तनीयम् । वङ्गराज्ञी भूत्वा देवी कालिन्दी वङ्गाधिदेवताकालीपदं पूजयतु । स्वतन्त्र एवास्या मार्गो मन्दाकिन्या भवतु ।

**राजा** – तथास्तु ।

(सर्वे निष्क्रान्ताः ।)

## ॥ प्रार्थना ॥

वङ्गानां भाग्यलक्ष्मीः सुफलितमगधा ब्रह्मपुत्रीसहाया
कालिन्दीजीवनौघा मधुरजलवहा जाह्नवीशुद्धतोया ।
येन क्रीडाकृतेऽसा अहिविषकलुषा निश्चितासीद्वयस्या
वन्दे देवं मुकुन्दं तमवनतशिरा भारतैकात्मतायै ॥ १५ ॥

॥ इति तृतीयोऽङ्कः ॥

## ॥ समाप्तं कालिन्दीनाटकम् ॥

# कालिन्दीसुभाषितानि ।

१ शीतच्छायापेक्षया सूर्यतप्तः
पान्थो नेयाद् गेहमभिप्रदीप्तम् ।

२ मदभरेण नरेण यदुच्यते
ननु बुधैर्वचनं तदुपेक्ष्यते ।

३ यदिह कुरुते श्रेयो मत्वा पिता तनयाकृते
हितकरमिदं नान्यैः कैश्चिन्मतं तु हितार्थिभिः ।
अथ न स निराकर्तुं शक्तः स्वयं कृतमन्यथा
प्रतिदिनमतश्चिन्ताज्वाला शनैः प्रदहत्यमुम् ॥

४ प्रमदाः प्रेमदाः सन्तु सदनोपवनादिषु ।
मा तेषां मरणान्तं तद् दारुणं रणमज्जनम् ॥

५ कटाक्षक्षेपपटुतां जानीयादङ्गना न वा ।
चापाकर्षं न परुषं समरे विस्मरिष्यति ॥

६ दैवं यदीयमिह निर्घृणता वृणोति
प्राप्नोति स प्रतिदिन विपदां प्रणालीम् ।

७ अवमानेन रुधिरं यस्य नोच्छलति स्वयम् ।
योऽथ मन्त्रयते मन्त्रं न स जीवन् नरो नृप ॥

८ नेदं सह्यं यद्विना सन्निमित्तं
नाशं यायाज्जीवनं चारुशीलम् ।

९ रत्नं यत्नैर्दुर्लभं नित्यरक्ष्यम् ।

१० विरलाः पुरुषा भवादृशा
जनतार्थे निजगौरवत्यजः ।
व्रतपालनदक्षतां कलौ
न हि कश्चिद् वृणुते प्रशासकः ॥

११ कुतो राजा जायां रिपुबलहृतां क्षत्रकुलजः
सहेत प्रज्ञावानपरिहततेजाः परिभवम् ।
अहिंसा हिंसा वा नृपतिचरितं दूषणयुतं
न शक्ता राज्ञि स्याद् भुवनदुरितं शंसितुमिह ॥

१२ *स्यात् खण्डितव्रतचितिः पुनरेव लोके ॥*

१३ न रूपं कुसुमानां वा नराणां वा चिरं भवेत् ।
*ज्ञानसंन्यासपादाभ्यां नित्यात्मानं भजेन्नरः ॥*

१४ न दुःखं न सौख्यं न भीतिर्न शङ्का
न हर्षश्च भव्यो न चासा अमर्षः ।
स्थिरं शाश्वतं केवलं ब्रह्म शान्तं
चिरं देव सन्यासिनो नित्ययुक्तम् ॥

१५ नैवं कामः शाम्यते कामभोगै-
राज्यासारैर्वर्धते वह्निरेभिः ।
कामान्हित्वा ब्रह्म विन्देत योगी
जन्मव्याधिं कामकामी लभेत ॥

१६ अनृणी ननु संन्यासी देयादेयैर्न बाध्यते ।
*यो न वाञ्छति न द्वेष्टि नैव तस्य भवेदृणम् ॥*

१७ हिंसा फलमहिंसायाः संभवेन्न कदाचन ।
यत्रैवं भासते नैषा सत्याहिंसा मतं मया ॥

१८ दग्धोऽङ्कुरः पल्लवमाप्नुयाद्वा
जलं वहत्यूर्ध्वमिव क्वचिद्वा ।

# कैलासकम्पः

A Radio Play
in Three Acts
on Chinese Aggression

S. B. Velankar



# *Kailasa-Kampa*

गौरवोद्गारहाराय गुरगर्वप्रहारिणे ।
गीर्वाणवाग्विहाराय हरये गुरवे नमः ॥

All India Radio desired that I should write a play in Sanskrit on Chinese aggression for broadcasting, since all other languages used by them were busy on this theme When I undertook to comply with this request, difficulties in my way promptly manifested themselves It was, however, necessary to demonstrate the capacity of this ancient language of ours to treat a modern and an unusual theme The result is an allegory in verse This device got over some of the anxieties of the A I R When the play was broadcast by them from Delhi on 4-3-1963 they indeed spoke of it as the first of its kind on the AIR

The first two Acts depict the type of talk that was common during the different phases of Chinese aggression in diverse quarters Act III contains an analytical statement of our policy and ends on the note on which the commoner ends his thoughts on this subject I dare not call the finale a prognosis

The entire scene is on Kailasa in Śiva's abode

Some modifications have been made in the script in printing But the total number of verses remains the same, the sequence of speeches has also not been changed, but those who acted the parts may suddenly find a changed expression at places Hence this caution

Mostly traditional metres have been used These are अनुष्टुभ्, इन्द्रवज्रा, उपजाति, उपेन्द्रवज्रा, औपच्छन्दसिक, कामदत्ता, द्रुतविलम्बित, पृथ्वी, भुजङ्गप्रयात, मन्दाक्रान्ता, मन्दारमाला, मालिनी, वसन्ततिलका, शार्दूलविक्रीडित, शालिनी, शिखरिणी, स्रग्धरा and हरिणी Verses 34, 57, 65, and 80 are in the traditionally unclassified metres and they have been named उमानाथ, सपात, नयन and शस्त्रसन्धि respectively Change of metre at various places has a significance which can perhaps be appreciated only in recitation Some experiments with the moods in metres have also been made

Verses 3, 41, 42, 72 and 101 are songs sung in शंकरा, हमीर, यमनकल्याण, अडाणाकानडा and कामोद Ragas Verses 73 to 79 are in पादाकुलक matra metre and have been sung in दरबारी कानडा Raga In addition, वसन्ततिलका in the प्रस्तावना has been sung in तोडी, Verse 1 (शार्दूलविक्रीडित) in भूप, Verse 4a (द्रुतविलम्बित) in मिश्र सारंग, Verse 97 (भुजगप्रयात) in मालकंस, Verse 98 (औपच्छन्दसिक) in मिश्रजोगी and Verse 99 (हरिणी) in मध्यमावती (Carnatic style) All these were rendered beautifully and concisely by the artistes who participated and I am indeed grateful to them Their names have been printed separately in the book The entire music was complimented on by a majority of the listeners and I thank them all for these encomia on behalf of the artistes

A Sanskrit Commentary and an English translation have been added to the text The commentary is far short of requirements compared to the traditional styles This was inevitable due to the shortage of printing space In some other respects however, it is more suggestive I have added elaborate instructions for a stage director As the entire play is in verse, an English translation has been printed for the convenience of my patrons The translation is not, however, meticulously exhaustive and does not seek to explain even the double meanings at various places Readers must make that extra effort to understand the original in spite of the translation

Among the listeners, Dr Chhabra of the Department of Archaeology had a number of suggestions to make Some of them have been implemented while revising the text for the press But his main objection was to the use of a Puranic allegory for a modern problem I think the background of a देवासुरसंग्राम is most apt for the topic dealt with, moreover, speeches by common characters could not have had the same effect as those by lofty Gods Other considerations are more pertinent. It is far better to elevate a type while criticizing its views than to commonize it Persons in high places could also be better typified in their presentation in the way the theme has been handled In such matters there will, nevertheless, always be a scope for some difference of opinion पिण्डे पिण्डे मतिर्भिन्ना ! I thank Dr Chhabra for the interest taken by him

If this play is intended to be presented to an audience, suitable masks to indicate the divine beings should be used and the rest of the body should be covered with suitably coloured raiments to obscure the undivinely forms of performers

Dr Prof M A Karandikar and Dr Prof Mrs Shailaja Karandikar of Delhi University were kind enough to go through the

first manuscript, attend a few rehearsals and make suggestions regarding the production. I am indebted to them

Dr. G. V. Devasthali, M A, Ph. D, of H. P. T. College Nasik has gone through the Manuscript but changes have been introduced after a perusal by him I must thank him for his ready co-operation.

My thanks are due to the Nirnayasagar Press of Bombay for speedy and excellent printing

Lastly,

कैलासेशप्रसादान् मद्वनिजननी युद्धकम्पेऽप्यभङ्गा
नित्यं तत्त्वोन्नतैषा जयतु नययुता शान्तिनीतिप्रणीतिः ।
चित्ते सीमा प्रतिष्ठां द्विपदभिगमनाद् यात्वहिंसाव्रताना-
मोजस्तेजोविराजां चरितशिथिलता नश्यतां बान्धवानाम् ॥

इति शम् ।

*New Delhi,*
*14-11-1963*

S B. Velankar

देहली-आकाशवाण्या 'कैलासकम्पः' ४-३-१९६३ खिस्तमितौ रात्रौ ९-३० कलाकसमये देहली-अ (A) तः ध्वनिक्षेपितः । तत्र ये कलाकाराः सहचरा आसंस्ते प्रवेशानुक्रमेणामी ।

| | |
|---|---|
| निवेदयित्री<br>जनता | सरोजिनी प्रधान |
| श्रोत्री<br>सरस्वती | सुशीला पाटणकर |
| शङ्करः | एस्. आइ. कृष्णमूर्ति |
| उमा | लता टिकेकर |
| कैलासः | अच्युत जोगळेकर |
| शशाङ्कः | माधव पारधी |
| स्वर्गङ्गा | उत्तरा बावकर |
| गणेशः | मामा वाळिंबे |
| देवेन्द्रः | बाळकृष्ण करंदीकर |
| शची | सुमन धोरकर |

लेखकः दादासाहेब वेलणकर
निर्मात्री सुधा वेलणकर

# कैलासकम्पः

[ निवेदयितृ–प्रस्तावना ।

चीनसेनाभिः अभिगतेषु भारतेषु कथं कैलासः कम्पितः, तत्र निवासिभिः किं कृतं, इदमत्र देहली–आकाशवाणी–पुरस्कृते कैलासकम्पे निदर्श्यते । सर्वे वयं ईश्वरांशा एव इति यदि अस्मिन् रूपके केचन निजप्रतिबिम्बं पश्येयुः तत् स्वाभाविकमेव । न तु अत्र देवदर्शने कश्चित् मनुजः चित्रितः ।

चीनाभियानकथनं प्रथमाङ्कलेखे
तेषां परागतिरितो गदिता द्वितीये ।
शान्तिप्रबन्धयतनं विवृतं तृतीये
श्रीरामसूरिनमनं प्रियभारतानाम् ॥ ]

## १

### निवेदयित्री

श्रीरामं दशशीर्षदानववधे लङ्काजये युञ्जती
कंसादे रिपुमण्डलस्य हनने श्रीबालकृष्णाश्रया ।
सत्कर्मप्रथने दुरात्ममथने देवावतारैर्वृता
धन्या भारतभूरशान्तिविलये दीप्ता यशोमालया ॥ १ ॥

---

॥ श्री ॥
गौरवोद्गारहाराय गुम्गर्वप्रहारिणे
गीर्वाणवाग्विहाराय हरये गुरवे नमः ॥

स्वातन्त्र्यपञ्चदशवर्षसुतौ हितायां
कैलासकम्पनकरे विहृते खलानाम् ।
क्रोधानले च जनिते ज्वलिते जनानां
उद्भाविते प्रलयिते—

श्रोत्री

किमभूत्

निवेदयित्री

शृणुध्वम् ॥ २ ॥

जनता

जय जय गिरिजाविलास
नन्दिवहन हिमनिवास ॥
गङ्गाश्रितजटाजूट
परिसेवितकालकूट
दानवारिसमरसुभट
पाहि नोऽत्र चन्द्रहास ॥ ३ ॥

शङ्करः ( जागरित्वा )

उमे कोलाहलं कोऽयमकाले कर्तुमुद्यतः ।
को नु वा ताण्डवे देवि कैलासेऽत्र प्रवर्तते ॥ ४ ॥

उमा

नूनं नेदं भवेन्नाथ प्रलयः प्रतिभाति मे ।

---

कैलासमाकरक्षोर्गवीणसुधाहिमाद्रिवरशिखरम् ।
कम्पहरा रसगुणिनी टीकागुटिका निबद्धेयम् ॥

कम्पहरा प्रारभ्यते । श्रीराममिति । भूपराग प्रयोक्तव्योऽत्र । शार्दूलविक्रीडितम् । भरीनिर्दश्ने भारतभूमिर्देवावतारानवलम्बत इत्यभिप्रायेण चीनाक्रमणेऽपि जनास्तामेव श्रद्धां प्राय आश्रयेयुरिति व्यज्यते । श्रीशब्देन मङ्गलाचरणम् । कविनामाप्यत्र सूच्यते ॥ १ ॥ स्वातन्त्र्येति । वसन्ततिलका । प्रतिचरणं पठने स्वरोच्चनाऽधिकाधिकं प्रदर्शनीया । श्रोत्रीस्वरो भीत्युत्कण्ठायुक्तोऽनुच्च । श्लोकद्वयानन्तरं नाटकं प्रारभ्यते । श्लोकद्वयमिदं नान्दीप्रस्तावादिपरम् ॥ २ ॥ जय जयेति । शङ्कराराग एकताल्श्च प्रयोक्तव्यौ । शङ्करो ध्याननिद्रावृत । गानारम्भेण पार्वती संत्रस्तमुद्रा । एवं दृश्यं प्रेक्षकैः । जनता न रङ्गमवतरेत् । पात्रैर्देवताभासनिर्मित्यै देवतामुखसम्यगुण्ठने शरीरान्यभागस्य विविधवर्णरङ्गैः पिधानं चाङ्गीकार्यम् ॥ ३ ॥ उमे इति । यावद्गानं न समाप्तं तावदन्त्यैव शङ्करोक्तिः । गानं सत्वरं समाप्यम-

शङ्करः ( सासूयं )

प्रभवेत्प्रलयस्यापि विना मां न च कश्चन ॥ ५ ॥

उमा

सीनासुरैः समारब्धः समरः सह भारतैः ।
ब्रह्मपुत्रतटाद् भूमिं हैमनीं प्रविशन्ति ते ॥ ६ ॥

कैलासः ( सहसा प्रविश्य )

हिमपर्वतजामातर्, कैलासः प्रणमाम्यहम् ।
त्रायतां त्रायतां देव नोचेन्नश्यामि धूर्जटे ॥ ७ ॥

शङ्करः

स्वस्ति ते वत्स कैलास समाश्वसिहि किं न्विदम् ।
उमाभ्रातुः कुतो भीतिर्हिमराजात्मजस्य ते ॥ ८ ॥

कैलासः

न ज्ञातो भयहेतुर्मे सम्यक् स प्रलयंकर ।
मामुत्खातुं समूलाग्रं प्रयतन्ते तु केचन ॥ ९ ॥

शङ्करः

इमे के हि स्वनाशाय कालभक्ष्याः समुद्यताः ।
कम्पयन्ते कथं वामी कैलासं शङ्करालयम् ॥ १० ॥

कैलासः

पाहि मां भगवन् रुद्र भवन्तं शरणागतः ।

शशाङ्कः ( सहसा प्रविष्टः )

भवन्मूर्ध्नि महादेव न स्थितिः संभवेदितः ॥ ११ ॥

उमा

शशाङ्क सुचिरं लब्ध्वा हरमूर्ध्नि पदं न्विदम् ।
इदानीं सहसान्यत्र भवता कुत्र गम्यते ॥ १२ ॥

---

पूर्णमेव ॥ ४ ॥ ५ ॥ **सीनेति** । देवासुराणां युद्धस्य पार्श्वभूमिरुपयोजिता । सीनासुराश्चीनारातिः । हैमनीं भूमिं सुवर्णभूमिं भारतानिति यावत् ॥ ६ ॥ ७ ॥ **स्वस्तीति** । कैलास उमाभ्राता हिमालयसुत इति कल्पितः कविना ॥ ८ ॥ **न ज्ञात इति** । अननुभूतकम्पः कैलासः प्रलयमाशङ्कते ॥ ९ ॥ १० ॥ **पाहि मामिति** । सर्वे शिवाश्रितास्त्रस्ता इति प्रदर्श्य भारतीयानां मनोव्यथाऽनुभाव्यते ॥ ११ ॥ १२ ॥

**शशाङ्कः** ( करुणाविष्टः )

भवानि, दुर्गे, हिमराजकन्ये,
षडास्यमातर् नटराजकान्ते ।
तनुः कलामात्रमिता मदीया
न राजते दैत्यचमूविधूता ॥ १३ ॥

**शङ्करः**

अभयं ते निशानाथ स्थीयतां मम मस्तके ।
भवता आहवा दृष्टा द्रष्टव्याश्च पुनः पुनः ॥ १४ ॥

**स्वर्गङ्गा** सहसा ( प्रविश्य )

सगरतनयशुद्धौ स्वर्गतो भूमिमार्गे
स्खलनभयलवोऽपि प्रादुरासीन्न मे यत् ।
कथमथ तनुकम्पो जायते नूतनोऽयं
न च ननु सहते मामद्य शीतांशुचूडः ॥ १५ ॥

**शङ्करः**

चन्द्रमौलिजटाजूटाश्रयावयेस्त्वां न कश्चन ।
मन्दाकिनि प्रवहतात् पयस्ते पावनं पुनः ॥ १६ ॥

आहूयतां मम सुतः कनीयान् गणनायकः ।
सर्वैश्च स्थीयतां स्वस्थैरलमत्र विशङ्कितैः ॥ १७ ॥

**सरस्वती**

चरणयो रणयोधमहागुरो
वरमते रमतेऽत्र सरस्वती ।
विजयतां जयताण्डवनर्तकः
समुदितो मुदितो गणनायकः ॥ १८ ॥

---

भवानि इति । उपेन्द्रवज्रा ॥ १३ ॥ १४ ॥ सगरेति । मालिनी । स्वर्गादधःपतन्त्या अपि मार्गे न स्पन्दनमासीत् । कुतोऽयत्र तनुकम्पोऽयमिति भावः । सगरतनयानां शुध्यर्थे भगीरथेन स्वर्गङ्गा पृथिव्यामानीतेति कथा विश्रुतैव ॥ १५ ॥ १६ ॥ १७ ॥ चरणयोरिति । द्रुतविलम्बितम् । द्वितीयतृतीयचतुर्थाक्षराणां पञ्चमषष्ठसप्तमस्थानेषु यथाक्रमं प्रतिचरणं पुनरुक्त्याऽनुप्रासः । रणयोधमहागुरो वरमते शङ्कर, सरस्वती चरणयोर्भवतो रमतेऽत्रैत्यन्वयः । सरस्वत्या प्रथमं निजनामकथनं ततः शङ्करविजयगायन

शङ्करः

वत्स, त्रस्ताः समुद्विग्ना आश्रिताः सकला इमे ।
मानसे जीवनं क्षुब्धं कैलासोऽपि प्रवेपते ॥ १९ ॥

गणेशः

उद्भावितो रणः सैन्यैश्चिन्ताक्रान्तश्च वृत्रहा ।
प्रसादं भवतो वाञ्छन्नुपैति जववानितः ॥ २० ॥

उमा

शचीनाथः समायातो नूनमत्याहितं भवेत् ।
भारता नु पुनर्मग्ना दुस्तरे विपदम्बुधौ ॥ २१ ॥

देवेन्द्रः ( प्रविश्य )

कैलासनाथ वन्देऽहं त्रिविष्टपमहापतिः ।
विज्ञातमेव भवतो ममागमनकारणम् ॥ २२ ॥

तत्प्रसीद महाकाल मार्गमादिश भारतान् ।
यथा रिपून् पराजित्य सुखिनः सन्तु सज्जनाः ॥ २३ ॥

शची ( प्रविश्य )

पिनाकपाणे प्रलयोद्भवः किं
कुतः सपद्येव भवेन भावी ।
मरुद्गणो वा विहरन् प्रमत्तो
जगद्विधूतिं सुतरां विधत्ते ॥ २४ ॥

गुरुः स्वयं वा स्थिरभावधर्मा
हिमालयो याति महावकम्पम् ।
शची भवत्पोप्यसुरेन्द्रपत्नी
दयां भयार्ताहमिह प्रयाचे ॥ २५ ॥

कुतो महत्ता सुरनायकस्य
न भारता यावदवाप्तकामाः ।
क एष शत्रुर्नु सुवर्णभूमिं
निवर्णतां नेतुमहोऽद्य सज्जः ॥ २६ ॥

---

तत्रैव गणेशागमनं निरूप्यते ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ पिनाकेति । शचीवचनं त्रिश्लोकमुपेन्द्रवज्राः । यदि देवेन्द्रेण सहागता शची तथापि तस्या रङ्गप्रवेशस्तस्या भाषणसमय एव । वृत्तभेदेन मनोऽवस्थाभेदो व्यज्यते । उदात्तभावमनुष्टुभ् । शीघ्रधीरभावमङ्गीकरोत्यत्रोपेन्द्रवज्रा । उच्चस्वरेण शची भाषणं प्रारभते । क्रमेण स्वरानुधना । तृतीयश्लोकपरार्धे पुनः स्वरः किंचिदुन्नतः ।

शङ्करः

स्वस्ति ते वीर देवेन्द्र स्वस्थचित्तो भवानघ ।
इन्द्राणि न च ते भीतिः स्थितेऽस्मिन् पार्वतीपतौ ॥ २७ ॥
विश्वस्थितियशा एष शेषशायी रमापतिः ।
शरणं ते सुराधीश त्रैलोक्यावनकर्मणि ॥ २८ ॥

देवेन्द्रः

दृष्टः पृष्टश्च दुर्गेश श्रीपतिर्मे सदासखः ।

शङ्करः

किमाह भगवान् विष्णुः कथ्यतां भोः शचीपते ॥ २९ ॥

देवेन्द्रः

स आह राजन् मा भैषीरैरावतमलंकुरु ।
गत्वा कैलासशैलेन्द्रं प्रसादय महेश्वरम् ॥ ३० ॥
आपत्काले समुत्थानं महाराष्ट्रस्य सद्गुणः ।
खड्गं खड्गेन विच्छिन्द्यान्महाराष्ट्रं हि भारताः ॥ ३१ ॥
बलं दास्यति विश्वेशो भारतेभ्यो रणाङ्गणे ।
लभ्यते च यशोमाली विनेता विपदामिति ॥ ३२ ॥

स्वर्गङ्गा

जनहिते न हि ते विरतिर्हरे
विपदि संपदि संगतिरस्ति ते ।
त्वदवनादवना अभयस्थिति-
र्वनचरा नच राष्ट्रपुरंदराः ॥ ३३ ॥

शशाङ्कः

पुरारिर्मुरारिस्त्रिपुरारिरेवं
मिथः संगता भारतरक्षणार्थे ।
उमानाथमूर्धन्यजटानिवासो
ममालं, न भीतिर्निशरामिदानीम् ॥ ३४ ॥

---

द्वितीयश्लोकापरार्धः परं करुणानिष्टस्वरः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ सर्वलोकेति । विष्णुनादिष्टो देवेन्द्रः शंकरमुपगतः । शंकरः पुनर्विष्णुशरणत्वमादिशति । महापदस्थितानामियं परंपरा ॥ २८ ॥ २९ ॥ ॥ ३० ॥ आपत्काल इति । मदद राष्ट्रं महाराष्ट्रम् ॥ ३१ ॥ ३२ ॥ जनहितेति । अनुप्रासः पूर्वोक्तः । द्रुतविलम्बितम् । आनन्दकन्दो मन्दस्वरोऽस्मोघार्थः । तव रक्षणाद् विना नगरसंरक्षणनाशो वनचरेभ्य इति भावः । वनचरा एव राष्ट्रनाशे तत्रैन्द्रा ननु स्युरित्यपि ॥ ३३ ॥ पुरारिरिति । नवीन छन्दमिद-

### कैलासः

आवेदयामि निजतातहिमालयाय
वृत्तान्तमेनमधुना नगशेखराय ।
दिक्पाल एष विहितोऽत्र दिशामुदीचीं
रक्षत्यहर्निशमिमां खलु भारतानाम् ॥ ३५ ॥

### शङ्करः

सुरेन्द्र वचनं विष्णोः सत्यं भूयादसंशयम् ।
अनुग्रहं ममापीमं वृणीष्व त्रिदशेश्वर ॥ ३६ ॥

### देवेन्द्रः

निःशङ्कमनसेदानीं प्रविशामि स्वमन्दिरम् ।
यशोमालिनमायान्तमुत्प्रेक्षेऽहं समाहितः ॥ ३७ ॥

### शची

नमामि तात दुर्गेश अनुगृह्या वयं तव ।
स्वगेहमुपयास्यामि निश्चिन्ता भवदाज्ञया ॥ ३८ ॥

### गणेशः

कोऽयमेयाद् यशोमाली सांपरायपरप्रभुः ।
प्रतितिष्ठति कैलासे गणानामधिपे मयि ॥ ३९ ॥

### सरस्वती

हृतं पवनतः सृतं लघुतृणं कृतं सर्वतः
स्थितं द्रुमवनं पतङ्गनिलयं प्ररूढं दृढम् ।
जनो वृतभयो मनो विचलितं तनोर्वेपथु-
ररौ श्रुतिमिते सुरौ हरिहरौ तु लोकोत्तरौ ॥ ४० ॥

---

भुमानायमित्युच्यतेऽस्माभिर्यवनैः ॥ ३४ ॥ आवेदयामीति । वसन्ततिलका । उदात्तं पठनम् । हिमालयदिक्पालत्वसंदर्भः सहेतुकः । नैषोऽष्टदिक्पालेषु पुराणनः प्रसिद्धः । अथैतिहासज्ञा जानन्ति तमुत्तरदिक्पालमिव भारतानाम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ कोऽयमिति । गणेशस्य दर्पोक्तिरियम् । शक्तिमतामहंकारिणां भारतीयाना प्रतिनिधित्वं गणेशेनास्मिन्नाटके कृतम् ॥ ३९ ॥ हृतमिति । पवनेन लघु तृणं हृतं सृतं सर्वतः कृतं भवति । दृढं प्ररूढं तु द्रुमवनं विहगानामालयं तिष्ठति । तद्वदेव युद्धवार्ताश्रवणेन जनानां भयवेपथू संजायेते । नैतादृशौ हरिहरौ । अतस्ताभ्यामभयदानं क्रियते । पृथ्वी-

जनता

आक्रमणं रिपुणा निदानं
देशबलानां तरुणतेजनम् ॥
अनले हवनं विबुधपूजनं
समरे मरणं राष्ट्ररक्षणं
पवनदोलनं कमलजीवनं
भारतवीररणं परदलनम् ॥ ४१ ॥

॥ इति प्रथमोऽङ्कः ॥

---

वृत्तम्। सरस्वती विश्वस्य संक्षेपतो वृत्तनिरूपणं सन्दर्शनं चास्मिन् रूपके करोति ॥ ४० ॥ आक्रमण-मिति। हमीररागनिबद्धमयुक्तिरत्र। देशे यद्बलं तिष्ठति तस्य निदानं रिपोराक्रमणेनैव भवति। पवने दोलने न वीरजीवनम्। तद् रिपुदलनेनैव सिद्ध्यति।

प्रथमेऽस्मिन्नङ्के शत्रुकृताक्रमणनिरूपणम्। तथा यानि पात्राणि रङ्गमाश्रितानि तान्यपि प्रस्तुतानि। प्रतिपात्रं भिन्नभावं कल्पितमस्यापि रूपं दिग्दर्शितम्। प्राकृतानां रिपोराक्रमणमभिज्ञन्य या प्रतिक्रिया वर्तते साऽपि निर्दिष्टा। महापद्मश्रितानां शिविकारवमावर्ण्य युद्धप्रारम्भ आसीदित्यपि जनानुमानं प्रदर्शितम्। इति प्रथमोऽङ्कः ॥

# २

### स्वर्गङ्गा

निखिला व्याप्ता हिमभूमिररिणा
जीवन्ति भीता वनचारिहरिणाः ॥
आशा सुराणां यशोमालिवीरे
साक्षान्न कुरुते तं वीरसेना ॥ ४२ ॥

### शशाङ्कः

गङ्गे गणेशोत्सवेष्वन्तरायो
न दीपावलिर्भारतानां मुदे ।
खिस्तोत्सवो नापि संतोषदायी
जनाः संनिमज्जन्ति युद्ध-ह्रदे ॥ ४३ ॥

### स्वर्गङ्गा

चित्तेषु तोषो जनानां कुतः स्यात्
अरीणां बलं राष्ट्रसीमप्रदेशे ।
चिन्ता दिवानक्तमेका ज्वलन्ती
विना रक्षणं सर्वमेतद् वृथा ॥ ४४ ॥

---

निखिलेति । यमनकल्याणरागझपतालप्रयोगः । अर्थभिगमनिरूपणेन द्वितीयाङ्कः प्रारभ्यते ॥ ४२ ॥
गङ्गे इति । मन्दारमाला । भीनाभिरमणं प्रस्तुतेषु गणेशोत्सवेषु संजातमिति ज्ञानमेव ॥ ४३ ॥ ४४ ॥

**कैलासः**

आकाशयानैर्विचरन्नराति-
र्निरीक्षते भारतभूमिमार्गम् ।
न्यस्यत्यराति प्रखराग्निगोला-
नयोमयास्तान् करवह्निशूलान् ॥ ४५ ॥

**गणेशः**

वीरा भारतमातृरक्षणपरा सङ्ग्रामवागीश्वरा
दैत्यध्वान्तदिवाकरा रिपुयश श्रीहाररात्रिंचरा ।
नानावेधिविधायुधोत्कटकरा उत्साहशौर्याकरा
पादाघातविनिनादिताद्रिकुहरा एते रणाग्रेसराः ॥ ४६ ॥

**शशाङ्कः**

जल विधर्तुं रिपुवीररूप
प्रयाति गङ्गाधरभक्तसेना ।
भगीरथ को नु पथोपदेशे
प्रेयान् यश श्रीवरपाणिबन्ध ॥ ४७ ॥

**सरस्वती**

किरणकारणकान्तिविलोपने
भुवि जने विजने रजनी द्रुता ।
घनतमोनतमोहहत जगत्
नवसुधावसुधाम न भासते ॥ ४८ ॥

---

आकाशेति । आकाशयानं 'विमानम्' । अयोमया अग्निगोला विविधाकृतिनलिकेभ्य क्षिप्यन्ते रणे । करवह्निशूल 'हॅन्डग्रेनेड' इत्याङ्ग्लभाषायाम् ॥ ४५ ॥ **वीरा इति** । शार्दूलविक्रीडितम् । भारतीय सेनाया रणाग्रेसर्या इदं सोत्साह वर्णनम् । सङ्ग्राम एव वाक्तस्या ईश्वरा । ध्वनिप्रमुख सङ्ग्रामो वागिव । संग्रामविषये वक्तव्यानामेवेश्वरा बहवोऽसत्सु । तदपि ध्वन्यते । रात्रिंचराश्चौरा । रात्रिंचरा दिवाकरा इति विरोधाभास । नाना बहवो वेधिविधा विधकप्रकारा आयुधानाम् । तै प्रपूरिता करा येषाम् ॥ सर्वाणि पद्यानि विनालाप विशिष्टभावदर्शकस्वरेण लयमङ्गितानि पठनीयान्यस्मिन् नाटके । स्वरोऽपि दिग्दर्शकेन समुचित उपदेष्टव्य ॥ ४६ ॥ **जलमिति** । उपजाति । गङ्गाधरेण गङ्गा धर्तव्याऽतो गङ्गाधर-भक्तसेना भारतीयानामियं सेना रिपुसैन्यगङ्गाजलौघ प्रतिहन्तुं प्रयाति । गङ्गामार्गदर्शने भगीरथस्त्ववश्य । स सेनानी कोऽस्त्यत्र य प्रियतरो यश श्रिय श्रेष्ठ पाणिबन्ध पाणिग्रहणयोग्य ॥ ४७ ॥ **किरणेति** । द्रुतविलम्बितम् । पूर्वोक्त प्रास । किरणानामेकमेव कारण सूर्य एवेति शास्त्रज्ञा मन्यन्ते । सूर्यास्ते सर्व स्थानेषु भुवि रात्रि प्रसृता । तमसो घननया नतमिव मोहहतमिव जगद् दृश्यते । नवसुधारूपिणो यमुनो द्रव्यस्य धाम स्थान सुधाधरश्चन्द्रमा नाद्यापि भासते दृश्यते विराजते । आगामी यशोमाली नेता भगीरथ यथ इवय ! रिपुवीररूप जलवधमोवश्च । अस्य पद्यस्य श्रवणाद् द्रुतविलम्बितान्तर्गतलयनाल्पलय ॥ ४८ ॥

### गणेशः

न गिलितः किल पर्वणि राहुणा
न मिलितः स च दर्शमरीचिना ।
क्षयमितो निजकर्मविपाकतः
समुदितो न ततः स कलङ्कितः ॥ ४९ ॥

### शशाङ्कः

उदरलम्बतया भयभञ्जनो
वदनवक्रतया जनरञ्जनः ।
मदनदाहिसुतो ननु दग्धवान्
दनुजवृन्ददलं गणनायकः ॥ ५० ॥

### गणेशः

तापं देहगतं विसोढुमबलो योऽयं सुधांशुर्भुवः
कैलासे वसतिं चकार नियतं मन्दाकिनीसंनिधौ ।
लज्जातसमनाः कलङ्कितवनुर्लुसो जटागह्वरे
तेनासौ ननु सिन्दुरासुरजयी वाच्यो गणानां पतिः ॥ ५१ ॥

### शशाङ्कः

गङ्गां कृत्वापि शीर्षे गरलहुतवहो यस्य शान्तो न भूतो
दीर्घां धृत्वापि मूर्धन्यलकघनजटास्तापमुक्तो न योऽभूत् ।
सर्वं हत्वाम्बरं योऽनधिगतशमनो दह्यते दह्यतेऽसौ
त्वत्तातः शम्भुदेवो निजशिरसि विधुं मां निधत्ते गणेश ॥ ५२ ॥

---

**न गिलित** इति । द्रुतविलम्बितम् । मत्स्वल्पोपमानितं चन्द्रं न गणेशः सहते । युद्धकालेऽपि महापदस्थिनानामन्तःस्थकल्हो निदिश्यते गणेशशशाङ्ककल्हनिरूपणात् । सर्वजननाथद्वास्थानं शंकरस्तस्य मस्तके स्थितश्चन्द्र इति तत्पुत्रगणेशस्यासूया कल्पिता । चन्द्रस्यादर्शने पर्वग्रहणं दर्शकालेऽमावास्यादिने सूर्यसंगतिश्चेति द्वे कारणे । असूयावचनमिदं गणेशस्य ॥ ४९ ॥ **उदरेति** । द्रुतविलम्बितम् । गणेशवचोऽसहमानः शशाङ्क उपहसति । गणेशस्य लम्बोदरत्वं वक्रतुण्डत्वं च प्रसिद्धे । पिता मदनदाहकर्तृत्वेन प्रसिद्धः । न पुत्रस्तु दनुजसेनादाहे समर्थ इति भावः ॥ ५० ॥ **तापमिति** । शार्दूलविक्रीडितम् । सुधांशुः शीतरश्मिरिति सर्वैरुच्यते । तस्य तु कलङ्कतापानलोऽसह्य एव । सिन्दुरासुरो जितो हतश्च गणपतिनेति पुराणप्रसिद्धकथनम् । तेनासावत्र काकुः ॥ ५१ ॥ **गङ्गामिति** । स्रग्धरा । गङ्गया जटाभिर्दिगम्बरत्वेन च हरस्य तापो न शान्तोऽतोऽसौ चन्द्रमसं मूर्धस्थं करोति न पुनश्चन्द्रः स्वतापनिवारणार्थं मन्दाकिनीसमीपे कैलासे तिष्ठतीति प्रतिपादनम् ॥ ५२ ॥ **त्वामिति** । स्रग्धरा । गणेशचतुर्थीदिने

गणेशः

त्वा दृष्ट्वा चौर्यदोषो मम दुरितहरस्यापि जातोऽत्र बन्धो
नित्यं कौलीनमास्ते गरलसहभवो मन्थने क्षीरसिन्धो ।
नानाधामानि नित्यं विचरसि भरणीरोहिणीरेवतीनां
राहोर्दैत्यस्य भीत्या क्षयविकलतनु पाण्डुर किं ब्रवीषि ॥ ५३ ॥

शशाङ्कः

विख्यात यज्जननमभवन्मृत्तिकापिण्डतस्ते
देवी माता हिमगिरिसुता त्वा मलेनाबभार ।
मूर्धा लब्धो मृतगजतनोर्मूषकारोहकस्त्वं
शान्ता वाणी भवतु किमहो निष्फलैः शब्दगुल्मैः ॥ ५४ ॥

उमा (प्रविश्य)

आरुह्य गिरिकूटानि प्रोल्लङ्घ्य च महादरी ।
रिपवः पुरं आयान्ति कुरु रक्षादलं निजम् ॥ ५५ ॥

सरस्वती

स्वसेना निःसृता देवि निजगाद गणेश्वर ।
दानवारिविनाशाय ससिद्धा निशितायुधैः ॥ ५६ ॥

शची (प्रविश्य)

आयातो रिपुरपकामरूप
सजातो नगरजनप्रकोप ।
न प्राप्तो विजयवरः स नेता
सपातो धृतिमतिसंभृतीनाम् ॥ ५७ ॥

---

भाद्रपदशुक्लचतुर्थ्यां नाम चन्द्रदर्शनेन चौर्यारोपो जायत इति जनापवादः । गणेशोऽपि तदारोपभागासीदिति पुराणेषु कथाभागः । कौलीनं प्रवादः । भरणीरोहिणीरेवतीनक्षत्रनामानि । प्रतिदिनं चन्द्रो नक्षत्रैः संयुज्यत इति विज्ञानमेव । पाण्डुर इति सम्बोधनानन्तरं किंचिद्विरम्य, किं ब्रवीषीति वचनं मानुषं यथास्वम् ॥ ५३ ॥ विख्यातमिति । मन्दाक्रान्ता । मृत्तिकापिण्डाद् गणेशजन्मेति किंचित् पुराणम् । न किंचिन इति श्लेषशरस्य कल्पनायां यथाक्रममनुसरणीय । तस्य शान्तिं शान्ता वाणीति । गुल्मानां न फलानि प्रसिद्धमेवम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ आयात इति । संजातं नगरजनप्रकोपः । यमनरूपा 'आगम' इत्युपपदेऽपुना । संपातः एकभाजनम् ॥ ५७ ॥ जननि इति । हरिणी । पुरमिदं दम्भजाया शची । बहूनां

गणेशः

जननि, पुरभिज्जाये, वीरे गणाधिपतौ स्थिते
विचलितमनः सेनानाथे कुतः प्रतिपद्यते ।
मम वचनतः सर्वे विघ्ना भवेयुरभाविनो
यदि मम पिता मां तत्कार्ये जवेन नियोजयेत् ॥ ५८ ॥

शशाङ्कः

देवासुराणां समराः प्रथिता इतिहासतः ।
ते सर्वे समजायन्त प्रागेव कलिकालतः ॥ ५९ ॥

आजन्मनो मे न रणं सुराणां
नामापि नाके न च दानवानाम् ।
तथापि मां दोषभुजं गणेशः
पिनाकिजाये कुरुते सुतस्ते ॥ ६० ॥

सरस्वती

कथं गणानामधिपो जनानां
विघ्नापनोदः परमार्थकन्दः ।
प्रसादरेखां ननु चन्द्रलेखां
विलोक्य चित्ते न मुदं विधत्ते ॥ ६१ ॥

उमा

हेरम्ब किमिदं वत्स कुतो दोषास्पदं शशी ।
दिगन्तकीर्तिरवनौ प्रीतिप्रद्योत एष हि ॥ ६२ ॥

गणेशः

दिगन्तान् भ्रमतो नित्यं दिगन्ता कीर्तिरीदृशी ।
दिगम्बरशिरोवाम धिगम्ब शिशिरोदयम् ॥ ६३ ॥

---

वाच्चिनीराणा, मम पिता नानुमन्यते मम पत्नी नानु मन्यते वेत्यादि कर्मणोऽकरणे कारणम् । तन्निदर्शितम ॥ ५८ ॥ ५९ ॥ **आजन्मन इति ।** उपजाति । चन्द्रनन्मना सदामृतसमवादेवा अमराः । न ततो दानवाः समरेऽशक्नुवन्निति कश्चिनम् । पिनाकी शकर ॥ ६० ॥ **कथमिति ।** उपजाति । प्रथमपङ्क्तिद्वये श्लेषेण स्तोचना ॥ ६१ ॥ ६२ ॥ **दिगन्तानिति ।** शिशिरोदयमिन्दुम् ॥ ६३ ॥ **हिमगिरीति ।** कामदत्ता

**शशाङ्कः**

हिमगिरितनये न सह्यमेतत्
*तनयमिममतो निरुन्धि सम्यक् ।*
अमृतमधुघटं निगृह्य यामि
प्रसभममरजातिरेतु नाशम् ॥ ६४ ॥

**शची**

मैवमिन्दो ! सकलहितार्थिभिः
स्थापितोऽसि त्रिनयनमूर्धनि ।
*गृहितश्च क्षयहृतजीविते*
ते सुधाया निधिरमरैर्वरैः ॥ ६५ ॥

**देवेन्द्रः**

( सहसा प्रविश्य )

घना तुहिनसंवृता विरचिता रजोवर्षिता
कृता हिमवता रणे निपुणता पराः सारिताः ।
हृता हि रिपुधीरता परिहृता जपे शङ्किता
*स्तुता त्रिबुधनिन्दिताऽरिमलता परावर्तिता ॥ ६६ ॥*

**उमा**

कोऽयं धीरो देवराज प्रपन्नो
येनारातिर्नाशितो हैमवर्षैः ।
कोऽयं शूरो यो हिमास्त्रं प्रयुङ्क्ते
देवो यक्षः किन्नरो वा नरो वा ॥ ६७ ॥

---

हृष्टं नतरयैः । अमरत्वबीजममृतं चन्द्रे घटे निहितं दैवैरिति कल्पना । निज[illegible] [illegible]
[illegible] व्यज्यते ॥ ६४ ॥ मैवमिति । त्रिनयनं [illegible] । [illegible] यथा
न तद् दानवैरपहृतं भवेत् । न [illegible] अपि [illegible] [illegible] हरमूर्धनि ॥६५॥
घनेति । तुहिनसंवृता हिम[illegible] रजोवर्षिता [illegible] [illegible] विरचिता [illegible] ।
हिमवता हिमगिरिपुत्रेण । [illegible] । स्तुता त्रिबुधा [illegible] [illegible] रिपुसेना
परावर्तिता । [illegible] [illegible] यथा [illegible] ॥ ६६ ॥ कोऽयमिति । [illegible] । [illegible] ।

### स्वर्गङ्गा

कुतो मानुषो यो हिमाद्रस्य वेत्ता
नराणा भवन्त्यग्निशस्त्राणि नित्यम् ।
अवश्य भवेदेष लोकातिशायी
कृत येन वीरायितं युद्धभूमौ ॥ ६८ ॥

### देवेन्द्र•

न ज्ञात तन्नाम वीरस्य तावन्
नैव ज्ञात स्थानमद्यापि तस्य ।
यात दृष्टं निर्जित तैजसेन
धन्यो वीरस्तस्य कालेऽवतार ॥ ६९ ॥

### शची

वीर कोऽपि भवानस्तु नवभारतरक्षक ।
कोपस्ते रिपुसहारे जयतादाजिसकरे ॥ ७० ॥

### शकर•

( आकाशभाषित )

देवाधीश ! प्रकटितमहा उत्तरस्या दिशाया
देवावास प्रवितततनुर्य स्थितो देवतात्मा ।
अस्ध हैम स्वयमिदमुमातात एप व्रतस्थो
न्यस्यत्युग्र भरतवसुधारक्षणे दक्षिणोऽसौ ॥ ७१ ॥

---

हिमवृष्टिमि ॥ ६७ ॥ कुत इति । भुजङ्गप्रयातम् । जगति शस्त्रास्त्राणि वह्निरूपाणि । हिमाद्रमतोऽतिमानुषम् ॥ ६८ ॥ न ज्ञातमिति । शालिनी । अद्भुतस्याश्चर्यस्य प्रसिद्धमिद वचनं यात दृष्टं निर्जितमिति ॥ ६९ ॥ ७० ॥ देवाधीशेति । मन्दाक्रान्ता । प्रकटितं महस्तेजो येन । देवानामावासो वसति । देवा हिमाल्ये त्रिविष्टपे निवसन्तीति मन्यते । प्रविनततनुर्विस्तृतदेह । देवतात्मा स्वयमपि देव एव । अस्त्युत्तरस्या दिशि देवतात्मा हिमालय इति कुमारसभवे । विष्णुशिवाभ्या स्ववचनं समर्थन हिमालयकृतिनेति सूच्यते । हिमवृष्ट्या चीनसेना प्रथममुत्सारिता इति वृत्तपत्रैरुद्घोषितमासीत् ॥ ७१ ॥ जयत्विति । अडागारागन्निगल्मयोग । हिमसंहिता हिमालय । सहितारास्देन तद्धिमाद्रधारण व्यज्यते । मुसद

जनता

जयतु हिमसंहिता ।
विजयिनी यया भारतजनता
धन्या निखिलाः सुभगभारताः ॥
सुखदजीवनैः सदा पूरिताः
हिमदारवर्षे रिपवो निहताः ॥ ७२ ॥

॥ इति द्वितीयोऽङ्कः ॥

---

[illegible]। अथैव युद्धस्य प्रथमदर्वं [illegible]। चीनसेना पराजिता । [illegible]
[illegible]।

न [illegible] । तदपि प्रथमश्चैके [illegible]
[illegible]। [illegible] निर्वाहः ।

[illegible] । अतो न [illegible]
[illegible] । न [illegible] । [illegible] । [illegible] । [illegible]
[illegible] । इति [illegible] ॥

# ३

## स्वर्गङ्गा

चिन्ताकान्ता ।

सीनैः समरैर्भारतजनता ॥
परे पीडिता मनया न कदा
अहिंसाव्रते रतेयं सदा
न च बलगाथा घृता तापदा
तयापि रणनिहिता ॥ ७३ ॥

जगती रमते शस्त्रसंभरे
विनाशहेतौ हेतिसंकरे
स्पर्धासूयाद्वेषसंवरे
मतिदीपाः शान्ताः ॥ ७४ ॥

---

*चिन्ताकान्तेति* । पादाकुलकान्त्येनामि । दरबारीकानडारागविलम्बितकेरवातालप्रयुक्तिः । समरस्य प्रथमपर्व समाप्तम् । हेमन्तशिशिरकालेन स्वल्पविरामोऽपि प्रदत्तः । तत्र किं कृतं किं करणीयमिति समालोचनावसरोऽधिगतो राष्ट्रेण । परपीडनवर्जमहिंसाव्रतमनुष्ठीयापि रणभ्रमः इति प्रथमः पाठः पठितव्यः । हेतिसंकरो विविधायुधव्यतिकरः । मित्रराष्ट्राणां स्पर्धयाऽसूयया द्वेषेण च प्रकाशसंवरणं जातम् । अतः सदसद्विवेकी मतिदीपः सर्वराष्ट्रेषु निर्वापितः शमितः । आयुधनिर्धिविनाशकरणमित्यगणयित्वैव तत्संग्रहे राष्ट्रशक्तिविनियोगो भुवने । सुवर्णभूम्यामत्र तु सांप्रतं दरिद्रताया दरी वसति । तां दरीं निपूर्य तत्रोपर्युद्धारगिरिरपि विरचनीयोऽस्माभिः । अतो नियोजनपूर्वकोद्यमकार्येषु व्यग्रेष्वसत्सु कुत इयं रणभीतिः परिणता

दरिद्रताया दरी वासिता
रचनीया उद्धारपर्वता
रणनीतिरियं कथं परिणता
स्वप्ने जागृतता ॥ ७५ ॥

दिवास्वप्न आसीत् संभूतेः
जागृतौ हि हानं रणरीतेः
अजातरिपुता नस्तु मन्यते
नैव सानुभूता ॥ ७६ ॥

शशाङ्कः

स्वर्गङ्गे शव वहतु जीवनं
मा निराशया ध्येयसाधनं
क्षयवृद्धिपरं यदि मे सहनं
जीविते न कटुता ॥ ७७ ॥

स्वर्गङ्गा

विमलजीवने मम न च कटुता
जलाशयो मे समृद्धिभर्ता
खलैः सा भवेद् यदि विनाशिता
व्यर्थमहं श्रान्ता ॥ ७८ ॥

शशाङ्कः

विफला न कृतिर्जगज्जीवने
सिन्धूच्छलनमिवेन्दुदर्शने
सज्जः सर्वो नियतशासने
भगवान् फलभोक्ता ॥ ७९ ॥

---

संप्राप्तेति प्राकृतानां मभयविस्मयः । यथा कश्चित् स्वप्नात् सहसा जागर्ति तथैव ननु जागरिता वयं रिपोराक्रमणेन । ननु स्वप्नव्यापृता वयमास । सत्यम् । दिवास्वप्न आसीदस्माकं संभूतेर्भाविविभवस्य । न निद्रितस्वप्नः । रणरीतेर्हानं निरेकपूर्वमेव । न स्वापनः । यत्तु भूतमनयेक्षित तदस्मद्रिपु-अस्तित्वमेव । मनमसामिर्न नः शत्रुर्जगत्याम् । अकारणशत्रुरपि जायत एवेति साक्षात्कृतम् । पूर्वजैः प्रणीता मण्डलरीतिः प्रदीना ॥ अत्र ये नादोच्चावचमत्कारा अवश्यास्ते दिग्दर्शकेनाध्येतव्याः । विलम्बितं पठनम् । नाल्पपा गेयाः । काश्चित्स्वरस्य एव पुनरुच्चार्याः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ स्वर्गङ्गे इति । गंभीरध्वनिरत्र प्रयोज्यः ॥ ७७ ॥ विमलेति । जीवने जले जीविते च । नियोजनेनानीता समृद्धिर्यदि शत्रुणा यदि नश्येत तर्हि मम व्यर्था इति निराशया न कश्चिच्छ्रमान् भजेत ॥ ७८ ॥ विफलेति । जगज्जीवने परमेश्वरपदे जगतो

गणेशः

समाप्यते समरो धरायां<br>प्रणीयते किल शस्त्रसन्धिः ।<br>सहायतां परराष्ट्रवर्गः<br>करोति भारतकृच्छ्रकाले ॥ ८० ॥

उमा

शान्तिप्रस्थापनार्थाय केऽमी राष्ट्रप्रशासकाः ।<br>प्रयतन्ते मतिमतां श्रेष्ठा भुवि गणाधिप ॥ ८१ ॥

गणेशः

सर्वेषां प्रमुखा नारी सिंहलद्वीपशासिका ।<br>प्राचीनजगतश्चान्ये शासितारस्तया सह ॥ ८२ ॥

कैलासः

कथं ज्ञेयं न समरं करिष्यति रिपुः पुनः ।<br>राजनीतिवृतं मैत्रं न सत्यं नच शाश्वतम् ॥ ८३ ॥

गणेशः

प्रवृत्ते युद्धे किं भरतकुलजाः सन्ति विमुखा<br>न वा तेषां भूमौ भवति विपुला प्रीतिरपि सा ।<br>सहस्राण्याजीनां विविधकुलजाता नरवरा<br>अकुर्वंस्तद्वत्ते पुनरपि करिष्यन्ति सुतराम् ॥ ८४ ॥

शशाङ्कः

विध्वंसियुद्धैर्न शिवं प्रजानां<br>जित्वापि लोकाश्चिरदुःखभाजः ।

---

जीवने व्यवहारे च पदार्थविज्ञानशास्त्रतत्त्वमिदम् । न किंचिन्नश्यत इति । भगवान् परमेश्वरो माध्यवाश्च ॥ ७९ ॥ **समाप्यत इति ।** शस्त्रसन्धिरिति नववृत्त जभरगी- । शस्त्रसन्धिरनाक्रमण उभयपक्षमान्यता स्वल्पकालपर्यन्तम् ॥ ८० ॥ ८१ ॥ **सर्वेषामिति ।** सिंहलद्वीप 'सीलोन' इति भाषायाम् । पुराणेषु लङ्का । 'सिंहलद्वीपशासिका' इत्यत्र 'श्रीमयी वृन्दनायिका' इत्यपि पाठः संभवति । प्राचीन पुराण पूर्व-दिक्स्थितं च ॥ ८२ ॥ ८३ ॥ **प्रवृत्त इति ।** शिखरिणी ॥ ८४ ॥ **विध्वंसीति ।** उपजातिः । युद्धपरि-

गणेशः

तर्हि रणानां परिहारमिच्छन्
व्रजेद् सुवीरः शरणं रिपून्सः ॥ ८५ ॥

शशाङ्कः

शरण्य एको जगतां परेशः
कुतः शरण्योऽस्त्वपराधवांस्तु ।

गणेशः

कथं ततः शासनमस्य युद्धं
विना विधातुं प्रभवेद् भवान्हि ॥ ८६ ॥

देवेन्द्रः

अन्येन चान्यायकृतं न युद्धं
प्रभुः प्रभावी परिहर्तुमत्र ।
तच्छासनं केवलमस्ति साध्यं
यथा पुनर्नैष यतेत योद्धुम् ॥ ८७ ॥

शशाङ्कः

पराजितः खेदमरैरपैति
पुनर्विजेतुं कुरुते मनीषाम् ।
अमर्षिणस्तस्य कुतो नु शान्ति-
र्वैरेण दूयेत दिने दिने सः ॥ ८८ ॥

उमा

प्रेमावतारः पुरुषो न लोके
जानाति नारी हृदयोरसर्वं तम् ।
संवर्धनैः सा जगतोऽस्य माता
शूरः स्वशौर्येण नृणां निहन्ता ॥ ८९ ॥

---

शरमर्यादा चर्च्यते । अनिच्छयापि युद्धमवश्यं भवत्येव ॥ ८५ ॥ शरण्य इति । उपेन्द्रवज्रा ॥ ८६ ॥ अन्येनेति । उपजातिः । प्रभुरपि परेणान्यायादारब्धमाकस्मिकं युद्धं न परिहर्तुं प्रभवति । यत्साधनीयं तच्छासनमेव । तदपि शासनमेवं भवितुमर्हति यथा नैष पुनर्युद्धकारितामङ्गीकुर्यात् । अतोऽहिंसामति-नाऽपि युद्धसज्जता विधेयैव । बलिन एव क्षमा स्यात् ॥ ८७ ॥ पराजित इति । उपजातिः । तथापि नैवं मान्यं यत्पराजितो न पुनर्युद्धमवलम्बेतेति । यतोऽपमानितमात्मानं मन्यमानस्तन्निराकरणे यतेतैवेति मानवस्वभावः ॥ ८८ ॥ प्रेमावतार इति । इन्द्रवज्रा । मानवः पराजितोऽप्येवं पुनः कलहोद्यतः ।

### सरस्वती

समर्चनं वल्लभदैवतस्य
समर्थनं राष्ट्रशिशुप्रणालेः।
समर्पणं जीवनहोमकुण्डे
समर्जनं भव्यमिहाङ्गनानाम् ॥ ९० ॥

### गणेशः

संयोजनं राष्ट्रबलस्य भूत्यै
उद्योजनं बुद्धिबलस्य तत्र।
नियोजनं शत्रुबलस्य शक्त्या
प्रयोजनं सत्पुरुषायुषोऽदः ॥ ९१ ॥

### शची

युक्ते इमे द्वे शकटस्य चक्रे
चक्रे विधाता चतुरो जगत्याम्।
गत्यां न तुल्ये तु सहप्रवासे
वासे समासे च मिथोऽभियुक्ते ॥ ९२ ॥

### कैलासः

हिमाभिषिक्तः शिवपादभक्तः
प्रदोपरक्तो गिरिजोक्तिसक्तः।
कैलास एष त्रिदशाधिनाथं
कम्पाद्विमुक्तः प्रणतः स्थितोऽत्र ॥ ९३ ॥

---

थत्रेङ्गित न पुरुषः परमप्रेम जानाति समाचरति वा। शूरस्य कृत्य हत्याप्रकारकमेव। शूरत्वं पुन. पुरुषस्य भूषणम्। सदा सर्वसंवर्धनं स्त्रीस्वभाव एव ॥ ८९ ॥ **समर्चनमिति**। उपेन्द्रवज्रा। वल्लभस्य दैवतवत्पूजनं परमप्रेम्णैव नारी कुरुते। शिशुसंगोपनं बालानां समर्थीकरणमपि नारीभिरेव क्रियतेऽन्नपानदानादिभिः शुश्रूषया च परमप्रेम्णा। यत्र जीवनहोमोऽविरतः प्रदीप्तस्तस्य कुण्डे नार्येव स्वाहुतिं समर्पयति परमप्रेम्णा। भव्यं समर्जनमिदं महाप्राप्तिरियं नारीणाम् ॥ ९० ॥ **संयोजनमिति**। इन्द्रवज्रा। राष्ट्रबलस्य भूत्यर्थे विभवार्थे संयोजन यथा राष्ट्रं बलवद् स्यात्। देशस्थितस्य बुद्धिबलस्यापि तत्रैवोद्योजन समुद्यमेन प्रयुक्तिः। शक्त्या प्रभुमन्त्रोत्साहशक्त्या शत्रुना नियमनम् ॥ ९१ ॥ **युक्ते इति**। दामयमकानुप्रास.। इमे द्वे नरनार्यौ संसारशकटे युक्ते चक्रे विधिश्चकार। न ते चक्रे गत्यां तुल्ये। वस्तुतः शकटचक्रे गत्या तुल्ये एव स्तः।

**शशाङ्कः**

विभूतिगङ्गा रणरङ्गरीतिः<br>
साङ्गा विना नो समरप्रसङ्गात्।<br>
आवर्तभङ्गैः परतीरशृङ्गं<br>
मातङ्ग एयाद् गजपुङ्गवत्वम्॥ ९४॥

**गणेशः**

एका विभूती रिपुनाशरीति-<br>
रन्या पराभूतिरनन्तरार्तिः।<br>
उत्साहमूर्तिर्निजकामपूर्ति-<br>
मराविघातैः सुतरां बिभर्ति॥ ९५॥

**देवेन्द्रः**

अरिर्यदा स्याद् बलवत्तरो नः<br>
संघातवान् नास्य रणेषु घातः।<br>
अन्यैरुपायैः क्रियतां व्यपायो<br>
बलस्य तस्यादिमनीतिरेवम्॥ ९६॥

**शची**

विधाता बलानां नियन्ता खलानां<br>
निहन्ता रिपूणां प्रणेता शुभानाम्।<br>
अनन्तावधिः शान्तितेजाः प्रजानां<br>
विनेता प्रभो जायतां भारतानाम्॥ ९७॥

---

न पुनरेते। नरनारीणां भिन्नमनोगतयः। सहप्रवासे संसारयात्रायाः। वासे निवासे। समासे संयोगे समाश्लेषे। एवं ते विधिरभियुनक्ति॥ ९२॥ हिमाभिषिक्त इति। उपजातिः॥ ९३॥ विभूतीति। उपजातिः। विभूतिरूपिण्या गङ्गाया रीतिस्तु रणाङ्गणवत्। समरप्रसङ्ग अवश्यस्तत्र। नोचेत् न साङ्गाऽपूर्णेति यावत्। गङ्गायामावर्ता भवन्ति जलचक्राणि वर्तन्ते तान्भित्त्वा यदा मातङ्गो गजः परतीरस्योच्चस्थानं गच्छति तदैव गजश्रेष्ठत्वमपि याति। न विना विजयं विभूतिर्विभवः॥ ९४॥ एकेति। उपजातिः। रिपुनाशरीतिरेवैका विभूतिः। अन्या पराभूतिरेव। तस्याश्च सकटपरपरा प्राप्नोति। उत्साहमूर्तिः शत्रुघातैरेव निजेप्सितं पूरयति॥ ९५॥ ९६॥ विधातेति। भुजङ्गप्रयातम्। अन्तिमप्रार्थनेतः समारब्धा।

### सरस्वती

भवताद् भवतापभञ्जन
मृतभव्या भुवनेषु भारती ।
जनताञ्जनतां च जीविते
विजयार्थे प्रजवी व्रजेद् भवान् ॥ ९८ ॥

### शङ्करः

जगति सुजनाः श्रद्धावन्तो जयन्ति निजं हितं
निहतदुरिता निष्ठावन्तो वनन्ति जयश्रियम् ।
सुकृतिकणिका शोभा धत्ते रजोधनविप्लुता
तपनकिरणश्रद्धायोगे महेन्द्रशरासनीम् ॥ ९९ ॥

### देवेन्द्रः

महादेव नमस्तुभ्यं भवतोपकृता वयम् ।
अस्तु धीरा भरतभूः शान्तिशीला तवाशिषा ॥ १०० ॥

### जनता

जयतु भरतभूमिरियं जयतु शान्तता ।
क्षमाशीलिनी भवताज्जगति वीरता ॥
सपरायदुरितहरं
जनपीडापरिहार
त्र्यम्बकं नमाम जयतु मातृभूमिसफलता ॥

॥ इति तृतीयोऽङ्कः ॥

समाप्तमिदं कैलासकम्पनाटकम् ।

---

मान्येमपुगशसनान्प्रयुक्ति- । विनाल्पार्थ पठन्म् ॥ ९७ ॥ भवतादिति । औपच्छन्दसिकम् । मिश्रनोगी-
रागविनान्प्रयुक्ति- । हे तापभञ्जन भव शिव भारती वाणीयं नाटके प्रयुक्ता भुवनेषु मृतभव्या कृतकल्याण

भवतु। यदा च जननाया नेत्रेऽञ्जनं प्रयोक्तव्यं विजयार्थे यथा प्रजा शिथिलतां विमुच्य देशकार्यकरी भवेत्तदा त्वमेवाञ्जनं वेगेन भव ॥ ९८ ॥ **जगतीति** । हरिणी । मध्यमावतीरागः कर्नाटकसंगीतपद्धत्याः । *श्रद्धया निष्ठया सुजना निज हितं जयलक्ष्मीं वनन्ति जयन्ति* । *यथा सुकृतिजललव ऐन्द्रधनुषीं शोभां* धत्ते यदा तस्य तपनकिरणैः श्रद्धया समागमः । रजोविप्लुतौ चेदं शोभासाधनं भवत्येव ॥ ९९ ॥ १०० ॥ **जयत्विति** । कामोदरागदादरातालप्रयुक्तिः । भरतवाक्यमिदम् ॥ १०१ ॥

इति तृतीयोऽङ्कः ॥

समाप्तं कैलासकम्पनाटकम् ॥

नैषा कृता कम्पहरा प्रतिशब्दार्थबोधिनी ।<br>
कम्प एवानया हार्यः कैलासस्याधिरोहणे ॥<br>
मन्दां पदावलिं न्यस्यन्च्छन्दरत्नचयाहृतिः ।<br>
गुरुप्रसादं वन्देऽहं वन्दारुं सिद्धकामनः ॥<br>
कैलासे नित्यवासः सुरसरिति रसः श्रेष्ठमत्या समासो<br>
नृत्येऽनन्तो विलासो हतमतितमसो यस्य चन्द्रश्च हासः ।<br>
तं वन्दे नन्दियानं परिहृतवसनं ब्रह्ममायानिदानं<br>
साधूनां संनिधानं दुरितविदलनं देवमाद्यान्तहानम् ॥

—समाप्ता कम्पहरा टीका ।—

## Translation

## THE QUAKING OF KAILASA

### 1

### Narrator

Blessed be the land Bhārata, which employs Shree Rāma in destroying the demon with ten heads while conquering Lankā, which resorted to the child Krṣṇa in wiping out the ring of enemies headed by Kaṅsa, which is wooed by incarnations of God in establishing good deeds and eliminating evil beings and which is brilliant with the string of successes after the disturbances are dispelled.

### 2

When fifteen beneficial years of Independence had elapsed, When the wicked moved ahead causing Kailāsa to shake and when the fire of public anger had been kindled (and) inflamed, when deluge had been manifested—

( Listener )

What happened ?

( Narrator )

Please listen.

( A great storm is raging in the region of the Himālayas. A prayer from the mass of people is heard )

3

Janatā

Be victorious, oh the grace of Girijā, the rider of Nandi, the dweller in Snow ;

Oh ( God ! ) with moon-laughter, whose knot of hair is the abode of Gaṅgā, who has swallowed the poison, who is a great warrior in the battles against the demon enemies, Protect us here.

4

Śaṅkara

( Awakened )

Umā ! Who is this, prone to making this untimely noise ? Oh Goddess ! who tends to dance the Tāndava here on Kailāsa?

5

Umā

Lord ! This might not be the dance; this is the deluge, as it appears to me.

Śaṅkara

No one indeed can order the deluge without me !

6

Umā

The Sina-demons have commenced a war with Bhārata. They are entering the land of gold from the banks of Brahmaputra.

7

Kailāsa

( Entering suddenly )

Oh the Son-in-Law of the Snow Mountain ! I, Kailāsa, pay my homage ( to you ). Oh God with matted hair on top, please protect, protoct, lest I perish

8

Śaṅkara

Child Kailāsa! blessings on you; take courage! What is, this, indeed! Whence can you, the brother of Umā and the Son of Himālaya have fear?

9

Kailāsa

Oh the Maker of Deluge! I have not fully understood this cause of my fear. But some ones are trying to uproot me from top to roots.

10

Śaṅkara

Who are thus indeed getting ready for their destruction when they are already the victims of Time? How indeed dare they shake Kailāsa the abode of Śaṅkara?

11

Kailāsa

Oh Lord Rudra, protect. me. I have sought your shelter.

Śaśāṅka

( Entering suddenly )

Mahādeva, I cannot stay on your head hereafter.

12

Umā

Śaśāṅka, having obtained a place for long on the head of Hara, where else would you go all of a sudden?

13

Śaśāṅka

Oh Bhavānī, Durgā, daughter of Himarāja, Mother of Sadāsya wife of the King of Dancers, my body has already been reduced to a phase; it is unbecoming when shaken by the army of demons.

14

Śaṅkara

Have no fear, Lord of the Night! Please stay on my head. You have seen wars; and would be seeing (them) again and again.

15

Sawrgaṅgā

(Entering suddenly)

Since even a shred of fear did not manifest in me on the path to earth from heavens at the purification of the Sons of Sagara, how is this new shaking of the body born? Or is it that the God having the cool-rayed Moon on the head cannot bear me to-day?

16, 17

Śaṅkara

None would move you from the mass of hair where the Moon is also on the head. Mandākinī, may your pure water flow again.

May my younger son, the leader of hordes be called. All of you may stay calmly. Have no doubts now.

18

Saraswatī

Oh, the great teacher of warriors in battle, of supreme intellect, Saraswatī delights here at your feet. May the dancer of the Victorious Tāṇḍava win; the joyous Gaṇanāyaka has appeared.

19

Śaṅkara

Child, all these proteges are afraid and annoyed. Water in the lake Mānasa is agitated. Even Kailāsa is shaking.

20

Gaṇeśa

Sinas have started a war and the Killer of Vṛtra, beset with anxiety, is speedily approaching here, desirous of your favour.

21

### Umā

Has the Master of Śachī come? Has something terrible happened indeed? Is Bhārata plunged again in the ocean of difficulties hard to overcome?

22, 23

### Devendra

(Entering)

Oh Lord of Kailāsa, I, the great Master of Heavens, bow to you. You already know the cause of my coming.

So, Oh Mahākāla, be gracious; Advise a way to Bhārata, so that defeating the enemies, the good ones will live happily.

24, 25, 26

### Śachī

(Entering)

Oh God, with the bow Pināka in his hand! Has the God Bhava created the future deluge, now only? Or is it the horde of his Maruts moving intoxicatedly, creating a world-shake easily?

Or is it the great Himālaya with qualities of steadiness, himself undergoing a fierce quake? I, Śachī, the wife of your protege Surendra, torn with fear, beg far mercy.

Where is the greatness of the Chief of Gods so long as Bhārata is not satisfied in her desires? Who is this enemy indeed who is prepared to make the land of gold (or good colour) colourless (pale?)

27 28

### Śaṅkara

Blessings on you, oh heroic Devendra?
Oh blameless one, be easy in your mind. Oh wife of Indra, while this Lord of Pārvatī is here, you have no fear.

Oh the overlord of Gods, in your duty of protecting the three worlds, this Lord of Ramā, the one who lies on Śeṣa, and is famed for maintaining the Uuiverse is your resort.

14

Śaṅkara

Have no fear, Lord of the Night! Please stay on my head. You have seen wars; and would be seeing (them) again and again.

15

Sawrgaṅgā

(Entering suddenly)

Since even a shred of fear did not manifest in me on the path to earth from heavens at the *purification of the Sons of* Sagara, how is this new shaking of the body born? Or is it that the God having the cool-rayed Moon on the head cannot bear me to-day?

16, 17

Śaṅkara

None would move you from the mass of hair where the Moon is also on the head. Mandākint, may your pure water flow again.

May my younger son, the leader of hordes be called. All of you may stay calmly. Have no doubts now.

18

Saraswatī

Oh, the great teacher of warriors in battle, of supreme intellect, Saraswatī delights here at your feet. May the dancer of the Victorious Tāṇḍava win; the joyous Gaṇanāyaka has appeared.

19

Śaṅkara

Child, all these proteges are afraid and annoyed. Water in the *lake* Mānasa is agitated. Even Kailāsa is shaking.

20

Ganeśa

Sinas have started a war and the Killer of Vṛtra, beset with anxiety, is speedily approaching here, desirous of your favour.

21

Umā

Has the Master of Śachī come ? Has something terrible happened indeed ? Is Bhārata plunged again in the ocean of difficulties hard to overcome ?

22, 23

Devendra

(Entering)

Oh Lord of Kailāsa, I, the great Master of Heavens, bow to you. You already know the cause of my coming.

So, Oh Mahākāla, be gracious; Advise a way to Bhārata, so that defeating the enemies, the good ones will live happily.

24, 25, 26

Śachī

( Entering )

Oh God, with the bow Pināka in his hand ! Has the God Bhava created the future deluge, now only ? Or is it the horde of his Maruts moving intoxicatedly, creating a world-shake easily ?

Or is it the great Himālaya with qualities of steadiness, himself undergoing a fierce quake ? I, Śachī, the wife of your protege Surendra, torn with fear, beg far mercy

Where is the greatness of the Chief of Gods so long as Bhārata is not satisfied in her desires ? Who is this enemy indeed who is prepared to make the land of gold ( or good colour ) colourless ( pale? )

27 28

Śaṅkara

Blessings on you, oh heroic Devendra ?
Oh blameless one, be easy in your mind. Oh wife of Indra, while this Lord of Pārvatī is here, you have no fear.

Oh the overlord of Gods, in your duty of protecting the three worlds, this Lord of Ramā, the one who lies on Śeṣa, and is famed for maintaining the Uuiverse is your resort.

